# दुर्योधन-निर्वेदः ।

( अथ प्रविशति प्रहारमूर्च्छितं रथस्थं दुर्योधनमपहरन् सूतः । )

सूतः—( ससम्भ्रमं परिक्रम्यावलोक्य च ) अये, अयमसौ सरसीतरङ्गविलोलनसुरभिशीतलमातरिश्वसंवाहितसान्द्रकिसलयो न्यग्रोधपादपः । उचिता विश्रामभूमिरियं समरव्यापारखिन्नस्य वीरजनस्य । अत्र स्थितश्चायाचिततालवृन्तेन हरिचन्दनच्छटाशीतलेनायत्नसुरभिणा दशापरिणामयोग्येन सरसीसमीरणेनामुना गतक्लमो भविष्यति महाराजः । लूनकेतुश्चायं रथोऽनिवारित एव प्रवेक्ष्यति छायाम् । ( प्रवेशं रूपयित्वा राजानमवलोक्य ) कथमद्यापि चेतनतां न लभते महाराजः । भोः कष्टम् ।

( निःश्वस्य )

मदकलितकरेणुभज्यमाने
विपिन इव प्रकटैकशालशेषे ।
हतसकलकुमारके कुलेऽस्मि-
स्त्वमपि विधेरवलोकितः कटाक्षैः ॥ १ ॥

( आकाशे लक्ष्यं बद्ध्वा ) ननु भो हतविधे, भरतकुलविमुख,

अदानस्य गदापाणेरनारूढस्य संशयम् ।
एवमपि भीमसेनस्य प्रतिज्ञा पूर्यते त्वया ॥ २ ॥

दुर्योधनः—( शनैरुपलब्धसंज्ञः ) आः, शक्तिरस्ति दुरात्मनो वृकोदरहतकस्य मयि जीवति दुर्योधने प्रतिज्ञां पूरयितुम् । वत्स दुःशासन, न भेतव्यं न भेतव्यम् । अयमहमागतोऽस्मि । ननु सूत, प्रापय रथं तमेवोद्देशं यत्र वत्सो मे दुःशासनः ।

सूतः—आयुष्मन्, समाश्वसिहि समाश्वसिहि ।

दुर्योधनः—धिक् सूत, किमनुष्ठितं भवता ।

रक्षणीयेन सततं बालेनाज्ञानुवर्तिना ।
दुःशासनेन भ्रात्राहमुपहारेण रक्षितः ॥ ५ ॥

सूतः—देव, मर्मभेदिभिरिपुतोमरशक्तिप्रासवर्षैर्महारथानामपहृतचेतनत्वान्निश्चेतनः कृतो महाराज इत्यपहृतो मया रथः ।

दुर्योधनः—सूत, विरूपं कृतवानसि ।

तस्यैव पाण्डवपशोरनुजाद्विगो मे
क्षोभैर्गदाशनिकृतेन विरोधितोऽस्मि ।
तामेव नाधिशयितो रुधिरार्द्रशय्यां,
दौःशासनीं यदहमाशु वृकोदरो वा ॥ ६ ॥

(निःश्वस्य नभो विलोक्य) ननु भो हतविधे, कृपाविरहित, भरतकुलविमुख,

अपि नाम भवेन्मृत्युर्न च हन्ता वृकोदरः ।

सूतः—शान्तं पापं शान्तं पापम् । महाराज किमिदम् ।

दुर्योधनः—घातितोऽशेषबन्धोर्मे किं राज्येन जयेन वा ॥ ७ ॥

(ततः प्रविशति शरप्रहारव्रणानद्धपट्टिकालंकृतकायः सुन्दरकः ।)

सुन्दरकः—आर्याः, अपि नामास्मिन्नुद्देशे सारथिद्वितीयो दृष्टो युष्माभिर्महाराजदुर्योधनो न वेति । (निरूप्य) कथं न कोऽपि मन्त्रयते । भवतु । एतेषां बद्धपरिकराणां पुरुषाणां समूहो दृश्यते । अत्र गत्वा प्रक्ष्यामि । (परिक्रम्य विलोक्य च) कथमेते खलु स्वामिनो गाढप्रहारहतस्य घनसन्नाहजालदुर्भेद्यमुखैः कङ्कपत्रैर्हृदयाच्छल्यान्युद्धरन्ति । तत्र खल्वेते जानन्ति । भवतु । अन्यतो विचेष्यामि । (अग्रतोऽवलोक्य किञ्चित्परिक्रम्य) इमे खल्वपरे

प्रभूततराः संगता वीरमनुष्या दृश्यन्ते। तदत्र गत्वा प्रक्ष्यामि। (उपगम्य) हंहो, जानीथ यूयं कस्मिन्नुद्देशे कुरुनाथो वर्तते इति। कथमेतेऽपि मां प्रेक्ष्याधिकतरं रुदन्ति। तत्र खल्वेतेऽपि जानन्ति। (दृष्ट्वा) हा, अतिकरुणं खल्वत्र वर्तते। यथा वीरमाता समरविनिहतं पुत्रकं श्रुत्वा रक्तांशुकनिवसनया समग्रभूषणया वध्वा सहानुम्रियते। (सश्लाघम्) साधु वीरमातः, साधु। अन्यस्मिन्नपि जन्मान्तरेऽनिहतपुत्रका भविष्यसि। भवतु। अन्यत्र प्रक्ष्यामि। (अन्यतो विलोक्य) अयमपरो यदुप्रहारनिहतकार्योऽकृतव्रणबन्ध एव योधसमूह इमं शून्यासनं तुरङ्गमुपालभ्य रोदिति। नूनमेतेषामत्रैव स्वामी व्यापादितः। तत्र खल्वेतेऽपि जानन्ति। भवतु। अन्यतो गत्वा प्रक्ष्यामि। (सर्वतो विलोक्य) कथं सर्व एवायस्थानुरूपं व्यसनमनुभवन्भागधेयविपमशीलितया पर्याकुलो जनः। तत्कमिदानीमत्र प्रक्ष्यामि। कं वोपालप्स्ये। भवतु। स्वयमेवात्र विचेष्यामि। (परिक्रम्य) भवतु। दैवमिदानीमुपालप्स्ये। हंहो दैव एकादशानाम क्षौहिणीनां नाथो ज्येष्ठो भ्रातृशतस्य भर्ता गाङ्गेयद्रोणाङ्गराजशल्यकृपकृतवर्माश्वत्थामप्रमुखस्य राजचक्रस्य सकलपृथ्वीमण्डलैकनाथो महाराजदुर्योधनोऽप्यन्विष्यते। अन्विष्यमाणोऽपि न ज्ञायते कस्मिन्नुद्देशे वर्तत इति। (विचिन्त्य निःश्वस्य च) अथवा किमत्र दैवमुपालभे। तस्य खल्विदं निर्भर्त्सितविदुरवचनबीजस्यावधीरितपितामहहितोपदेशाङ्कुरस्य शकुनिप्रोत्साहनाढिविरूढमूलस्य जतुगृहद्यूतविषदायिनः संभृतचिरकालसंवर्द्धवैरसघालस्य पाञ्चालीकेशग्रहणकुसुमस्य फलं परिणमति। (अन्यतो विलोक्य) यथात्रैव विविधरत्नप्रभासंवलि

सूर्यकिरणप्रसूतशक्रचापसहस्रसम्पूरितदशदिशामुखोल्लसत्केतुवंशो रथो दृश्यते तदहं तर्कयाम्यवश्यमेतेन महाराजदुर्योधनस्य विश्रामोद्देशेन भवितव्यम्। यावदिह पश्यामि। ( उपगम्य दृष्ट्वा निःश्वस्य च ) कथमेकादशानामक्षौहिणीनां नायको भूत्वा महाराजो दुर्योधनः प्राकृतपुरुष इवाश्लाघनीयायां भूमावुपविष्टस्तिष्ठति। अथवा तस्य खल्विदं पाञ्चालीकेशग्रहकुसुमस्य फलं परिणमति। ( उपसृत्य सूतं संज्ञया पृच्छति। )

सूतः—( दृष्ट्वा ) अये, कथं संग्रामात्सुन्दरकः प्राप्तः।

सुन्दरकः—( उपगम्य ) जयतु जयतु महाराजः।

दुर्योधनः—( विलोक्य ) अये सुन्दरक, कच्चित्कुशलमङ्गराजस्य।

सुन्दरकः—देव, कुशलं शरीरमात्रकेण।

दुर्योधनः—किं किरीटिनास्य निहता धौरेया हतः सारथिर्भग्नो वा रथः।

सुन्दरकः—देव, न भग्नो रथः। अस्य मनोरथः।

दुर्योधनः—किमविस्पष्टकथितैराकुलमपि पर्याकुलयसि मे हृदयम्। तदलं संभ्रमेण। अशेषतो विस्पष्टं कथ्यताम्।

सुन्दरकः—यद्देव आज्ञापयति। देवस्य मुकुटमणिप्रभावेण पनीता मे रणप्रहारवेदना। ( साटोपं परिक्रम्य ) शृणोतु देवः। अस्तीदानीं कुमारदुःशासनवध (इत्यर्धोक्ते मुखमाच्छाद्य शङ्कां नाटयति। )

सूतः—सुन्दरक कथय। कथितमेव देवेन।

दुर्योधनः—कथ्यताम्। श्रुतमस्माभिः।

सुन्दरकः—( स्वगतम् ) कथं दुःशासनवधः श्रुतो देवेन। ( प्रकाशम् ) शृणोतु देवः। अद्य तावत्कुमारदुःशासनवधामर्षितेन स्वामिनाङ्गराजेन कुटिलभ्रुकुटीभङ्ग-

भीमफललाटपट्टेनाविशातमन्थानतीक्ष्णमोक्षनिशितशर-
धारावर्षिणाभियुक्तः स दुराचारो दुःशासनवैरी मध्यम-
पाण्डवः ।

उभौ—ततस्ततः ।

सुन्दरकः—ततो देव, उभयबलमिलद्दीप्यमानकरितुरगपदा-
तिसमुद्भूतधूलिनिकरेण पर्यस्तगजघटासंघातेन च वि-
स्तीर्यमाणेनान्धकारेणान्धीकृतमुभयबलम् । न खलु गग-
नतलं लक्ष्यते ।

उभौ—ततस्ततः ।

सुन्दरकः—ततो देव, दूराकृष्टधनुर्गुणास्फोटनटङ्कारेण गम्भी-
रभीषणेन ज्ञायते गर्जितं प्रलयजलधरेणेति ।

दुर्योधनः—ततस्ततः ।

सुन्दरकः—ततो देव उभयोरपि तयोरन्योन्यसिंहनादगर्जित
पिशुनं विविधपरिमुक्तप्रहरणाहतकवचसंगलितज्वलनवि-
द्युच्छटाभासुरं गम्भीरस्तनितचापजलधरं प्रसरच्छरधा-
रासहस्रवर्षि जातं समरदुर्दिनम् ।

दुर्योधनः—ततस्ततः ।

सुन्दरकः—ततो देव, एतस्मिन्नन्तरे ज्येष्ठस्य भ्रातुः परिभव-
शङ्किना धनञ्जयेन ... निर्जीर्णरथिपरासितध्वजाग्र
स्थितमहावानरस्तुरङ्गमसंवाहनव्यापृतवासुदेवशङ्खचक्रा-
सिगदाशार्ङ्गलाञ्छनचतुर्बाहुदण्ड ... पूरितपाञ्चजन्यदेवदत्त-
तारस्वरितमिलितभैरवनादरवबधिरीकृतदिशामुखः ... धावितस्तमु-

सारधिकस्तं देशमुपगतः कुमारवृषसेनः ।

दुर्योधनः—( सावष्टम्भम् ) ततस्ततः ।

सुन्दरकः—ततश्च देव, तेनागच्छतैव कुमारवृषसेनेन विदलितासिलताश्यामलस्निग्धपुङ्खैः कठिनकङ्कपत्रैः कृष्णवर्णैः शाणशिलानिशितश्यामलशल्यवन्धैः कुसुमित इव तरुर्मुहूर्तेन शिलीमुखैः प्रच्छादितो धनञ्जयस्य रथवरः ।

उभौ—( सहर्षम् ) ततस्ततः ।

सुन्दरकः—ततो देव, तीक्ष्णविदितनिशितभल्लबाणवर्षिणा धनञ्जयेनेषद्विहस्य भणितम्—'अरे रे वृषसेन, पितुरपि तावत्ते न युक्तं मम कुपितस्याभिमुखं स्थातुम् । किं पुनर्भवतो बालस्य । तद्गच्छ । अपरैः कुमारैः सह गत्वा युध्यस्व।' एवं वाचं निशम्य गुरुजनाधिक्षेपेणोद्दीपितकोपोपरक्तमुखमण्डलाधिजृम्भितभृकुटीभङ्गभीषणेन चापधारिणा कुमारवृषसेनेन मर्मभेदकैः परुषाक्षरैः सुदिवसक्तमणयैर्निर्भर्त्सितो गाण्डीवी बाणैर्न पुनर्दुर्वचनैः ।

दुर्योधनः—साधु वृषसेन, साधु । सुन्दरक, ततस्ततः ।

सुन्दरकः—ततो देव, निशितशराभिघातवेदनोपजातमन्युना किरीटिना चण्डगाण्डीवजीवाशब्दनिर्जितवज्रनिर्घातघोषेण बाणातिपतनप्रतिषिद्धदर्शनप्रसरेण प्रस्तुतं शिक्षाबलानुरूपं किमप्याश्चर्यम् ।

दुर्योधनः—( साकूतम् ) ततस्ततः ।

सुन्दरकः—ततो देव, तत्तादृशं प्रेक्ष्य शत्रोः समरव्यापारचतुरत्वमविभाविततूणीरमुखधनुर्गुणगमनागमनशरसन्धानमोक्षचटुलकरतलेन कुमारवृषसेनेनापि सविशेषं प्रस्तुतं समरकर्म ।

दुर्योधनः—ततस्ततः ।

सुन्दरकः—ततो देव, अत्रान्तरे विमुक्तसमरव्यापारो मुहूर्त-

विश्रामितवैरानुबन्धो कुरुराजपाण्डवबलयोः 'साधु कुमारवृषसेन, साधु' इति कृतकलकलो वीरलोकोऽवलोकयितुं प्रवृत्तः।

दुर्योधनः—(सविस्मयम्) ततस्ततः।

सुन्दरकः—ततश्च देव, अवधीरितसकलराजन्यानुष्कचक्रपराक्रमशालिनः सुतस्य तथाविधेन समरकर्मारम्भेण दर्पारोपकरुणासङ्कटे वर्तमानस्य स्वामिनोऽङ्गराजस्य निपतिता शरपङ्क्तिर्निर्भीमसेने बाष्पपर्याकुला दृष्टिः कुमारवृषसेने।

दुर्योधनः—(सभयम्) ततस्ततः।

सुन्दरकः—ततश्च देव, उभयबलप्रवृत्तसाधुकारामर्षितेन गाण्डीविना तुरगेषु सारथावपि रथवरे धनुष्यपि जीवायामपि नरेन्द्रलाञ्छने सितातपत्रे च व्यापारितं सममं शिलीमुखासारम्।

दुर्योधनः—(सभयम्) ततस्ततः।

सुन्दरकः—ततो देव, विरथोलूनगुणकोदण्ड परिभ्रमणमात्रव्यापारो मण्डलाग्रेण विचरितुं प्रवृत्तः कुमारवृषसेनः।

दुर्योधनः—(साशङ्कम्) ततस्ततः।

सुन्दरकः—ततो देव, सुतरथविध्वंसनामर्षितेन स्वामिनाङ्गराजेनागणितभीमसेनाभियोगेन परिमुक्तो धनञ्जयस्योपरि शिलीमुखासारः। कुमारोऽपि परिजनोपनीतमन्यं रथमारुह्य पुनरपि प्रवृत्तो धनञ्जयेन सहायोधितुम्।

उभौ—साधु वृषसेन, साधु। ततस्ततः।

सुन्दरकः—ततो देव, भणितं च कुमारेण 'रे रे ताताधिक्षेपमुखर मध्यमपाण्डव मम शरास्तव शरीरमुखिक्षिप्यमाक्षिप्य निपतन्ति' इति भणित्वा शरसहस्रैः पाण्डवशरीरं प्रच्छाद्य सिंहनादेन गर्जितुं प्रवृत्तः।

दुर्योधनः—( सविस्मयम् ) अहो बालस्य पराक्रमो मुग्धस्य भावेऽपि । ततस्ततः ।

सुन्दरकः—ततश्च देव, तं शरसम्पातं समवधूय निशितशराभिघातजातमन्युना किरीटिना गृहीता रथोत्सङ्गात्क्वणत्कनककिङ्किणीजालझङ्कारविराविणी मेघोपरोधविमुक्तनभस्तलनिर्मला निशितश्यामलस्निग्धमुखी विविधरत्नप्रभाभासुरभीषणरमणीयदर्शना शक्तिर्विमुक्ता कुमाराभिमुखी ।

दुर्योधनः—( सविषादम् ) ततस्ततः ।

सुन्दरकः—ततो देव, प्रज्वलन्तीं शक्तिं प्रेक्ष्य विगलितमङ्गराजस्य हस्तात् सशरं धनुर्हृदयाद्धीरसुलभ उत्साहो नयनाद्बाष्पसलिलमपि । रसितं च सिंहनादं वृकोदरेण । दुष्करं दुष्करमित्याक्रन्दितं कुरुवरेण ।

दुर्योधनः—( सविषादम् ) ततस्ततः ।

सुन्दरकः—ततो देव, कुमारवृषसेनेनाकर्णपूरितैर्निशितक्षुरप्रैर्वार्यमाणा निर्भयार्धपथ एव भागीरथीवागच्छन्ती यथा भगवता विषमलोचनेन तथा त्रिधा कृता शक्तिः ।

दुर्योधनः—साधु वृषसेन, साधु । ततस्ततः ।

सुन्दरकः—ततश्च देव, एतस्मिन्नन्तरे कलमुखरेण वीरलोकसाधुवादेनान्तरितः समरतूर्यनिर्घोषः । सिद्धचारणगणविमुक्तकुसुमप्रकरेण प्रच्छादितं समराङ्गणम् । भणितं च स्वामिनाङ्गराजेन 'भो वीर वृकोदर, असमाप्तस्तव ममापि समरव्यापारः । तदनुमन्यस्व मां मुहूर्तम् । प्रेक्षावहे तावद्वत्सस्य तव भ्रातुश्च धनुर्वेदशिक्षाचतुरत्वम् । तवाप्येतत्प्रेक्षणीयम्' इति ।

दुर्योधनः—ततस्ततः ।

सुन्दरकः—ततो देव, विश्रमितायोधनव्यापारौ मुहूर्तमिव

मितनिजवैरानुबन्धौ द्वावपि प्रेक्षकौ जातौ भीमसेनाङ्गराजौ ।

दुर्योधनः— साभिप्रायम् । ततस्ततः ।

सुन्दरकः—ततश्च देव, शक्तिखण्डनामर्षितेन गाण्डीविना भणितम् 'अरे रे दुर्योधनप्रमुखाः (इत्यर्धोक्ते लज्जां नाटयति ।)

दुर्योधनः—सुन्दरक कथ्यताम् । परवचनमेतत् ।

सुन्दरकः—शृणोतु देव । अरे दुर्योधनप्रमुखाः कुरुबलसेनाप्रभवः अविनयनौकर्णधार कर्ण युष्माभिर्मम परोक्षं बहुभिर्महारथैः परिवृत्यैकाकी मम पुत्रकोऽभिमन्युर्व्यापादितः । अहं पुनर्युष्माकं प्रेक्षमाणानामेवैतं कुमारवृषसेनं स्मर्तव्यशेषं करोमि ।' इति भणित्वा सगर्वमास्फालितमनेन पञ्चजन्यघोषभीषणज्यारवं गाण्डीवम् । एतावतापि सज्जीकृतं कालपृष्ठम् ।

दुर्योधनः—( सावहित्थम् ) ततस्ततः ।

सुन्दरकः—ततश्च देव, प्रतिषिद्धभीमसेनव्यवसायानन्तरमारम्भेण गाण्डीविना विरचिते अङ्गराजवृषसेनरथद्वयोपरि हे बाणनद्यौ । ताभ्यामपि द्वाभ्यामन्योन्यदर्शितशिक्षाविशेषाभ्यामभियुक्तः स कुरुनाथो मध्यमपाण्डवः ।

दुर्योधनः—ततस्ततः ।

सुन्दरकः—ततश्च देव, गाण्डीविना तावदसितज्याविघात मानविज्ञातबाणवर्षेण तथाचरितं पत्रिभिर्यथा न रजस्तलं न स्वामी न रथा न धरणी न कुमारो न केतुवंशो न बलानि न सारथिर्न तुरङ्गमा न दिशो न वीरलोकश्च लक्ष्यते ।

दुर्योधनः—( सविस्मयम् ) ततस्ततः ।

सुन्दरकः—ततश्च देव, अतिक्रान्ते शरवर्षे क्षणमात्रं सासिद्ध

नादे पाण्डवबले विमुक्ताक्रन्दे कौरवबले उत्थितो महान्कलकलो हा हतः कुमारवृषसेनो हा हत इति।

दुर्योधनः—( सबाष्परोधम् ) ततस्ततः।

सुन्दरकः—ततो देव, महत्या वेलया प्रेक्ष्य हतसारथितुरङ्गं लूनातपत्रकेतुवंशं स्वर्गप्रभ्रष्टमिव सुरकुमारमेकेनैव मर्मभेदिना शिलीमुखेन भिन्नदेहं रथमध्ये परिस्थितं कुमारमागतः।

दुर्योधनः—( सास्रम् ) अहह कुमारवृषसेन। अलमतः परं श्रुत्वा। हा वत्स वृषसेन, हा मदङ्कदुर्ललित, हा गदायुद्धप्रिय, हा राधेयकुलप्ररोह, हा प्रियदर्शन, हा दुःशासननिर्विशेष, हा सर्वगुरुवत्सल, प्रयच्छ मे प्रतिवचनम्।

पर्याप्तनेत्रमचिरोदितचन्द्रकान्त-
मुद्भिद्यमाननवयौवनरम्यशोभम्।
प्राणापहारपरिवर्तितदृष्टि दृष्टं
कर्णेन तत्कथमिवाननपङ्कजं ते ॥८॥

सूतः—आयुष्मन्, अलमत्यन्तदुःखावेगेन।

दुर्योधनः—सूत पुण्यवन्तो हि दुःखभाजो भवन्ति। अस्माकं पुनः—

प्रत्यक्षं हतबन्धूनामेतत्परिभवाग्निना।
हृदयं दह्यतेऽत्यर्थं कुतो दुःखं कुतो व्यथा ॥९॥

( मोहमुपगतः। )

सूतः—समाश्वसितु समाश्वसितु महाराजः। ( पटान्तेन वीजयति। )

दुर्योधनः—( लब्धसंज्ञः ) भद्र सुन्दरक, ततो वयस्येन किं प्रतिपन्नमङ्गराजेन।

सुन्दरकः—ततश्च देव, तथाविधस्य पुत्रस्य दर्शनेन संगलितमश्रुजातमुद्भिद्यमानवेष्टितपरप्रहरणाभियोगेन स्वामि-

नामियुक्तो धनञ्जयः । तं च सुतवधामर्षोद्दीपितपराक्रमं तथा परिक्रामन्तं प्रेक्ष्य नकुलसहदेवपाञ्चालप्रमुखैरन्तरितो धनञ्जयस्य रथः ।

दुर्योधनः—ततस्ततः ।

सुन्दरकः—ततो देव, शल्येन भणितम्—' अङ्गराज, हततुरङ्गमो भग्नकूबरश्चैष रथो न योग्यो भीमार्जुनाभ्यां सहायोद्धुम् ' इति परिवर्तितो रथोऽवतारितः स्वामी स्यन्दनात् । प्रहारकार्यं च समाश्वासितः । ततश्च स्वामिना सुचिरं विलप्य परिजनोपनीतमन्यं रथं प्रेक्ष्य दीर्घं निःश्वस्य मयि दृष्टिर्विनिक्षिप्ता । सुन्दरक, एहीति भणितं च । ततोऽहमुपगतः स्वामिसमीपम् । ततोऽपनीय शीर्षस्थानात्पट्टिकां शरीरसंगलितैः शोणितबिन्दुभिर्लिखमुखं बाणं कृत्वाभिलिख्य प्रेषितो देवस्य सन्देशः । ( पट्टिकामर्पयति । दुर्योधनो गृहीत्वा वाचयति । )

'स्वस्ति, महाराजदुर्योधनं समराङ्गणात्कर्णः एतदन्ते कण्ठे गाढमालिङ्ग्य विज्ञापयति ।

अस्त्रग्रामविधौ कृती न समरेष्वस्यास्ति तुल्यः पुमान्
भ्रातृभ्योऽपि ममाधिकोऽयमनुना जेयाः पृथासूनवः ।
यत्सम्भावित इत्यहं न च हतो दुःशासनारिर्मया
तं दुःखप्रतिकारमेहि भुजयोर्वीर्येण बाष्पेण वा ॥ ६ ॥'

दुर्योधनः—वयस्य कर्ण, किमिदं भ्रातृशतवधदुःखितं मामपरेण वाक्शल्येन घट्टयसि । भद्र सुन्दरक अथेदानीं किमारम्भोऽङ्गराजः ।

सुन्दरकः—देव, अद्याप्यारम्भः पृच्छयते । अपनीतशरीरावरण आत्मवधकृतनिश्चयः पुनरपि पार्थेन सह समरं मार्गयते ।

दुर्योधनः—( सावेगमासनादुत्थितः ) सूत, रथमुपनय । सुन्दरक, त्वमपि मद्वचनात्त्वरिततरं गत्वा वयस्यमङ्गराजं

प्रतिबोधय । अरामसिसाहसेन । अभिप्र पवायमावयो-
सङ्कल्पः । न खलु भवानेको जीवितपरित्यागाकाङ्क्षी ।
किंतु ।

दत्त्वा पार्थान्सलिलमशिवं बन्धुवर्गाय दत्त्वा
मुक्ता वाष्पं सह कतिपयैर्मन्त्रिभिश्चारिभिश्च ।
कृत्वान्योन्यं सुचिरमपुनर्भावि गाढोपगूढं
संत्यक्ष्यावो हतनतुमिमां दुःखितौ निर्वृतौ च॥१०॥

अथवा शोकं प्रति मया न किञ्चित्सन्देष्टव्यम् ।

वृषसेनो न ते पुत्रो न मे दुःशासनोऽनुजः ।
त्वां बोधयामि किमहं त्वं मां संस्थापयिष्यसि ॥११॥

सुन्दरकः—यद्देव आज्ञापयति । ( निष्क्रान्तः । )

दुर्योधनः—तूर्णमेव रथमुपस्थापय । ( ... )

सूतः—( कर्णं दत्त्वा ) देव, द्वेषासंवलितो नेमिध्वानः श्रूयते । तथा तर्कयामि नूनं परिजनोपनीतो रथः ।

दुर्योधनः—सूत, गच्छ त्वं सज्जीकुरु ।

सूतः—यदाज्ञापयति देवः । ( निष्क्रम्य पुनः प्रविशति । )

दुर्योधनः—( विलोक्य ) किमिति नारूढोऽसि ।

सूतः—एष खलु तातोऽम्बा च रुद्धराधिष्ठितं रथमारुह्य देवस्य समीपमुपगतौ ।

दुर्योधनः—किं नाम तातोऽम्बा च सम्प्राप्तौ । कष्टमतिबीभत्समाचरितं दैवेन । सूत, गच्छ त्वं स्यन्दनं तूर्णमुपनय । अहमपि तावदर्शनं परिहरन्नेकान्ते तिष्ठामि ।

सूतः—देव, त्वदेकशेषवान्धवावेतौ कथमिव न समाश्वासयसि ।

दुर्योधनः—सूत, कथमिव समाश्वासयामि विमुखभागधेयः । पश्य ।

अवैधव्यां रणमुपगतौ तातमम्बां च दृष्ट्वा
भ्रातस्ताभ्यां शिरसि विनतोऽहं च दुःशासनश्च

तस्मिन्काले प्रसभमरिणा प्रापिते तामवस्थां
पार्श्वे पित्रोरपगतघृण किं नु वक्ष्यामि गत्वा ॥१-९॥

तथाप्यवश्यं वन्दनीयौ गुरु । ( निष्क्रान्त सूत । )

( तत प्रविशति रथयानेन गान्धारी सञ्जयो धृतराष्ट्रश्च । )

धृतराष्ट्र —वत्स सञ्जय, कथय कथय कस्मिन्नुद्देशे कुरुकुलकाननैकशेषप्रवालो वत्सो मे दुर्योधनस्तिष्ठति । कच्चिज्जीवति वा न वा ।

गान्धारी—जात, यदि सत्यं जीवति मे वत्सस्तत्कथय कस्मिन्देशे वर्तते ।

सञ्जयः—नन्वेष महाराज एक एव न्यग्रोधच्छायायामुपविश्य तिष्ठति ।

गान्धारी—( सकरुणम् ) जात एकाकीति भणसि । किं नु खलु साम्प्रतं भ्रातृशतमस्य पार्श्वे भविष्यति ।

सञ्जय —तात अम्ब, अवतरतं रथात् । ( उभाववतरणं नाटयत । )

सञ्जय —(उपसृत्य) विजयतां महाराज । नन्वेष तातोऽम्बया सह प्राप्त किं न पश्यसि महाराज । ( दुर्योधनो वैक्लव्यं नाटयति । )

धृतराष्ट्रः—शल्यानि व्यपनीयकङ्कवदनैरुन्मोचिते कङ्कटे
बद्धेषु व्रणपट्टकेषु शनकै कर्णे कृतापाश्रय, ।
दूरान्निर्जितनान्यिवान्नरपतीनारोर्यवंशीस्तथा
सद्यः पुत्रक वेदनेति न मया पापेन दृष्टो भवान् ॥

( धृतराष्ट्रो गान्धारी च स्पर्शेना परिलिङ्गत । )

गान्धारी—वत्स, अतिगाढप्रहारवेदनापर्याकुलत्वादस्मासु सन्निहितेष्वपि न प्रसरति ते वाणी ।

धृतराष्ट्र —वत्स दुर्योधन किमदृष्टपूर्वं सम्प्रति मय्यप्युपम व्याहारः ।

गान्धारी—वत्स, यदि त्वमप्यस्मानालपसि तत्किं साम्प्रतं वत्सो दुःशासन आलपत्यथ दुर्मर्षणो वान्यो वा। (रोदिति।)

दुर्योधनः—जातोऽहमप्रतिकृतानुजनाशदर्शी,
तातस्य बाष्पपयसां तव चाम्ब हेतुः।
दुर्जातमत्र विमले भरतान्वये यः
किं मां सुतक्षयकरं सुत इत्यवैषि॥ १४॥

गान्धारी—जात, अलं परिदेवितेन। त्वमपि तावदेकोऽस्याऽन्धयुगलस्य मार्गोपदेशकः। तच्चिरं जीव। किं मे राज्येन जयेन वा।

दुर्योधनः—मातः किमप्यसदृशं कृपणं वचस्ते
सुक्षत्रिया क्व भवती क्व च दीनतैषा।
निर्वत्सले सुतशतस्य विपत्तिमेतां
त्वं नानुचिन्तयसि रक्षसि मामयोग्यम्॥ १५॥

नूनं विनेष्यतिमिदं सुतशोकस्य।

सञ्जयः—महाराज, किं वार्यं लोकवादो वितथः 'न घटस्य कूपपतने रज्जुस्तत्रैव प्रक्षेप्तव्या' इति।

दुर्योधनः—अपुष्कलमिदम्। उपक्रियमाणाभावे किमुपकरणेन। (रोदिति।)

धृतराष्ट्रः—(दुर्योधनं परिष्वज्य) वत्स समाश्वसिहि। समाश्वासय चास्मानिमामतिदीनां मातरं च।

दुर्योधनः—तात, दुर्लभः समाश्वास इदानीं युष्माकम्।

किन्तु—

कुन्त्या सह युवामद्य मया निहतपुत्रया।
विराजमानौ शोकेऽपि तनयाननुशोचतम्॥ १६॥

गान्धारी—जात, एतदेव साम्प्रतं प्रभूतं यत्त्वमपि तावदेको

नानुशोचितव्य । तज्जात, प्रसीद । एष ते शीर्षाञ्जलि । निवर्त्यतां समरव्यापारात् । अपश्चिमं कुरु पितुर्वचनम् ।

धृतराष्ट्रः—वत्स, शृणु वचनं तवाम्बाया मम च निहता शेषबन्धुवर्गस्य । पश्य ।

दायादा न ययोर्बलेन गणितास्तौ द्रोणभीष्मौ हतौ
कर्णस्यात्मजमग्रतः शमयतो भीतं जगत्फाल्गुनात् ।
वत्सानां निधनेन मे त्वयि रिपुः शेषप्रतिज्ञोऽधुना
मानं वैरिषु मुञ्च तात पितरावन्धाविमौ पालय ॥ १७ ॥

दुर्योधन —समरात्प्रतिनिवृत्य किं मया कर्तव्यम् ।

गान्धारी—जात, यत्पिता ते विदुरो वा भणति ।

सञ्जय —राजन्, पथ्यमिदम् ।

दुर्योधनः—सञ्जय, अद्याप्युपदेष्टव्यमस्ति ।

सञ्जयः—राजन्, यावत्प्राणिति तावदुपदेष्टव्यभूमिर्विजिगीषु प्रज्ञावताम् ।

दुर्योधनः—(सक्रोधम्) शृणुमस्तावदञ्जन एव प्रज्ञावतोऽस्मान् प्रति प्रतिरूपमुपदेशम् ।

धृतराष्ट्रः—वत्स, युक्तवादिनि सञ्जये किमत्र क्रोधेन । यदि प्रकृतिमापद्यते तदहमेव भवन्तं ब्रवीमि । श्रूयताम् ।

दुर्योधन —कथयतु तात ।

धृतराष्ट्रः—वत्स किं विस्तरेण । सन्धत्ता भवानिदानीमपि युधिष्ठिरमीप्सितपणबन्धेन ।

दुर्योधन —तात, तनयस्नेहवैक्लव्यादम्बा यत्किंचनाभिधत्ते । सञ्जयस्य काममेवं ब्रवीतु । युष्माकमप्येवं व्यामोहः । अथवा प्रभवति पुत्रनाशजन्मा हृदयज्वर । अन्यच्च । तात, अस्खलितभ्रातृशतस्तदा नवीरितवासुदेवसामोपन्यासः सम्प्रति हतपितामहाचार्यानुजराजचक्रविपत्तिः स्वशरीरमात्रस्नेहादुदात्तपुरुषमर्यादाविरुद्धमसुखावसानं च कथ-

मिव करिष्यति दुर्योधनः सह पाण्डवैः सन्धिम् ।
अन्यच्च नयवेदिन्सञ्जय,
हीयमानाः किल रिपोर्नृपाः सन्दधते परान् ।
दुःशासने हतेऽहीना मानुजाः पाण्डवाः कथम् ॥ २८ ॥

धृतराष्ट्र --वत्स, एवं गतेऽपि मत्प्रार्थनया न किञ्चिन्न करोति युधिष्ठिर । अन्यच्च । सर्वमेवापकृतं नानुमन्यते ।

दुर्योधन —कथमिव ।

धृतराष्ट्र —वत्स, श्रूयतां प्रतिज्ञा युधिष्ठिरस्य । नाहमेकस्यापि भ्रातुर्विपत्तौ प्राणान्धारयामीति । बहुच्छलत्वात्संग्रामस्यानुजनाशमाशङ्कमानो यदय भवते रोचते तदैवासौ सज्ज सन्धातुम् ।

सञ्जय —एवमिदम् ।

गान्धारी—जात, उपपत्तियुक्तं प्रतिपद्यस्व पितुर्वचनम् ।

दुर्योधनः—तात, अम्ब, सञ्जय,

एकेनापि विनानुजेन मरणं पार्थः प्रतिज्ञातवान्
भ्रातॄणां निहते शते प्रियहते दुर्योधनो जीवितुम् ।
तं दुःशासनशोणिताशनमरिं भिन्नं गदाकोटिभि
र्भीमं दिक्षु न विक्षिपामि कृपणः सन्धिं विदध्यामहम् ॥

गान्धारी—हा जात दुःशासन, हा मदङ्कदुर्ललित, हा युवराज, अश्रुतपूर्वा खलु कस्यापि लोके ईदृशी विपत्तिः । हा वीरशतप्रसविनी हतगान्धारी दुःखशतं प्रसूता न पुनः सुतशतम् । ( सर्वे रुदन्ति । )

सञ्जय —( बाष्पमुत्सृज्य ) तात, अम्ब, प्रतिबोधयितुं महाराजमिमां भूमिमुपागतौ । तदात्मापि तावत्संस्तभ्यताम्

धृतराष्ट्र —वत्स दुर्योधन, एवं विमुखेषु भागधेयेषु त्वयि चानुज्झति मानपर्यमरिषु त्वदेकोपजीवितावलम्बनेयं तपस्विनी गान्धारी कमवलम्बतां शरणमहं च ।

दुर्योधन —श्रूयतां यत्प्रतिपत्तुमिदानीं प्राप्तकालम् ।

कलितभुवना भुक्तैश्वर्यास्तिरस्कृतविद्विषः
प्रणतशिरसां राज्ञां चूडासहस्रकृतार्चनाः ।
अभिमुखमरीन्घ्नन्तो हता शतमात्मजा
वहतु सगरेणोढां तातो धुरं सहितोऽम्बया ॥ २० ॥

विपर्यये त्वस्याधिपतेरुल्लङ्घित क्षात्रधर्मः स्यात् ।

( नेपथ्ये महान्कलकलः । )

गान्धारी— आकर्ण्य सभयम् ) जात, कुत एतद् हाहाकारमिश्रं तूर्यरसितं श्रूयते ।

सञ्जय —अम्ब भूमिरियमेवंविधानां भीरुजनत्रासजननी महानिनादानाम् ।

धृतराष्ट्र —वत्स सञ्जय ज्ञायतामतिभैरव एष विस्तारी हाहारवः । कारणेनास्य महता भवितव्यम् ।

दुर्योधन —तात प्रसीद । पराङ्मुखं खलु दैवमस्माकम् । यावदपरमपि किञ्चिदत्याहितं न श्रावयति तावदेवाज्ञापय मां संग्रामावतरणाय ।

गान्धारी —जात मुहूर्तं तावन्मां मन्दभाग्यां समाश्वासय ।

धृतराष्ट्र —वत्स यद्यपि भवान्समराय कृतनिश्चयस्तथापि रह परसनीयानोपायविन्यसनाम् ।

दुर्योधन —प्रत्यक्षं हतबान्धवा मम परे हन्तुं न योग्या रहः
किं वा तेन कृतेन शौरिव हतं यत्र प्रकाशं रणे ।

गान्धारी —जात एकाकी त्वम् । कस्ते साहाय्यं करिष्यति ।

दुर्योधन —एकोऽहं भवतीसुतक्षयकरो मातः सपत्नोऽव्ययः
सार्धं केवलमेतु दैवमधुना निष्पाण्डवा मेदिनी ॥

(नेपथ्ये कलकलानन्तरम् । )

भो भो योधाः, निवेदयन्तु भवन्तः कौरवेश्वराय. इदं

महत्कवनं प्रवृत्तम् । अलममियश्रवणपराङ्मुखतया । यतः कालानुरूपं प्रतिविधातव्यमिदानीम् ।

तथा हि ।

त्यक्तप्राजनरश्मिरङ्कितधनु पार्थाङ्कितैर्मार्गणै
वाँहै स्यन्दनवर्त्मनां परिचयादाकृष्यमाण शनै ।
वार्तामङ्गपतेर्विलोकनजलैरावेदयन्पृच्छतां
शून्येनैव रथेन याति शिबिरं शल्य कुरून् शल्ययन् ॥२२॥

दुर्योधन.—( श्रुत्वा साशङ्कम् ) आ, केनेदमविस्पष्टमशनिपातदारुणमुद्घोषितम् । क कोऽत्र भो ।

( प्रविश्य सम्भ्रान्त ) सूत —हा, हताः स्म । ( आत्मानं पातयति । )

दुर्योधन —अपि, कथय ।

धृतराष्ट्रसञ्जयौ—कथ्यतां कथ्यताम् ।

सूत.—आयुष्मन्, किमन्यत् ।

शल्येन यथा शल्येन मूर्च्छित प्रविशता जनौघोऽयम् ।
शून्यं कर्णस्य रथं मनोरथमिवाधिरूढेन ॥ २३ ॥

दुर्योधन —हा वयस्य कर्ण । ( मोहमुपागतः । )

गान्धारी —जात समाश्वसिहि, समाश्वसिहि ।

सञ्जय —समाश्वसितु समाश्वसितु महाराज. ।

धृतराष्ट्र.—भो., कष्टं कष्टम् ।

भीष्मे द्रोणे च निहते य आसीदवलम्बनम् ।
वत्सस्य मे सुहृच्छूरो राधेय. सोऽप्ययं हत. ॥२४॥

वत्स, समाश्वसिहि समाश्वसिहि । ननु भो हतविधे,

अन्योऽनुभूतशतपुत्रविपत्तिदु ख
शोच्यां दशामुपगत सह भार्ययाहम् ।
अस्मिन्नशेषितसुहृद्गुरुबन्धुवर्गे
दुर्योधनेऽपि हि कृतो भवता निराशः ॥२५॥

वत्स दुर्योधन, समाश्वसिहि समाश्वसिहि। समाश्वासय तपस्विनीं मातरं च।

दुर्योधन —( लब्धसंज्ञः

अयि कर्ण कर्णसुखदां प्रयच्छ मे
गिरमुद्गिरन्निव मुदं मयि स्थिराम्।
सततावियुक्तमकृताप्रियं कथं
वृषसेनवत्सल विहाय यासि माम् ॥२६॥

( पुनर्मोहमुपगतः । सर्वे समाश्वासयन्ति । )

दुर्योधनः—मम प्राणाधिके तस्मिन्नङ्गानामधिपे हते।
उच्छ्वसन्नपि लज्जेऽहमाश्वासे तात का कथा ॥२७॥

अपि च।

शोचामि शोच्यमपि शत्रुहतं न वत्सं
दुःशासनं तमधुना न च बन्धुवर्गम्।
येनातिदुःश्रवमसाधु कृतं न कर्णे
कर्णस्य तस्य निधनं निधनं कुलस्य ॥२८॥

गान्धारी—जात, शिथिलय तावत् क्षणमात्रं वाष्पमोक्षम्।

धृतराष्ट्रः—वत्स, क्षणमात्रं परिमार्जयाश्रूणि।

दुर्योधन —मामुद्दिश्य त्यजन्प्राणान्केनचिन्न निवारितः।
तत्कृते त्यजतो वाष्पं किं मे दीनस्य वार्यते ॥२९॥

सूत, केनैतदसम्भवनीयमस्मत्कुलान्तकरणं कर्म कृतं स्यात्।

सूतः—आयुष्मन्, एवं किल जनः कथयति—

भूमौ निमग्नचक्रश्चक्रायुधसारथेः शरैस्तस्य।
निहतः किरीटसूनोरस्मत्सेनाकृतान्तस्य ॥ ३० ॥

दुर्योधन —कर्णाननेन्दुस्मरणात् क्षुभितः शोकसागरः।
वाडवेनेव शिखिना पीयते क्रोधजेन मे ॥ ३१ ॥

तात, अम्ब, प्रसीदतम्।

ज्वलनः शोकजन्मा मामयं दहति दुःसहः ।
समानायां विपत्तौ मे वरं संशयितं रणे ॥३२॥

धृतराष्ट्रः—( दुर्योधनं परिष्वज्य रुदन् )

भवति तनय लक्ष्मीः साहसेष्वीदृशेषु
द्रवति हृदयमेतद्भीममुत्प्रेक्ष्य भीमम् ।
अनिकृतिनिपुणं ते चेष्टितं मानशौण्ड
च्छलबहुलमरीणां सङ्गरं हा हतोऽस्मि ॥३३॥

गान्धारी—जात, तैनैव सुतशतकृतान्तेन वृकोदरेण समं समरं मार्गयसे ।

दुर्योधनः—तिष्ठतु तावद्वृकोदरः ।

पापेन येन हृदयस्य मनोरथो मे
सर्वाङ्गचन्दनरसो नयनाभिलेन्दुः ।
पुत्रस्तवाम्ब तव तात नयैकशिष्यः
कर्णो हतः सपदि तत्र शराः पतन्तु ॥ ३४ ॥

सूत, अलमिदानीं कालातिपातेन । सज्जं मे रथमुपहर । भयं चेत्पाण्डवेभ्यस्तिष्ठ । गदामात्रसहाय एष समरभुवमवतरामि ।

सूतः—अलमन्यथा सम्भावितेन । अयमहमागत एव । ( निष्क्रान्तः ।

धृतराष्ट्रः—वत्स दुर्योधन, यदि स्थिरः प्रयासमान्दस्धुमयं ते व्यवसायस्तत्सविदितेषु धीरेषु सेनापतिः कश्चिदभिषिच्यताम् ।

दुर्योधनः—नन्वभिषिक्त एव ।

गान्धारी—जात कतरः पुनः स यस्मिन्नाशामवलम्बिष्ये ।

धृतराष्ट्रः किं वा शल्य उत वाश्वत्थामा ।

सञ्जयः—हा कष्टम् ।

गते भीष्मे हते द्रोणे कर्णे च विनिपातिते ।
आशा बलवती राजन् शल्यो जेष्यति पाण्डवान् ॥३५॥

दुर्योधन —किं वा शल्येनोत वाश्वत्थाम्ना ।
कर्णालिङ्गनदायी वा पार्थप्राणहरोऽपि वा ।
अनिवारितसम्पातैरयमास्माश्रुवारिभि. । ३६ ॥

प्रविश्य सम्भ्रान्त ) सूत —आयुष्मन्,
भीमार्जुनौ रथारूढौ पृच्छन्तौ स्वामितस्तत ।

सर्वे—कश्च कश्च ।

सूत —स कर्णारि स च क्रूरो वृककर्मा वृकोदर ॥ ३७ ॥

गान्धारी —( सभयम् ) जात किमत्र प्रतिपत्तव्यम् ।

दुर्योधनः—ननु सन्निहितैवेयं गदा।

गान्धारी—हा हतास्मि मन्दभागिनी ।

दुर्योधन.—अम्ब, अलमिदानीं कार्पण्येन । सञ्जय, रथमारोप्य पितरौ शिबिरं प्रतिष्ठस्व । समागतोऽस्माकं शोकापनोदी जन । ८

धृतराष्ट्र —वत्स, क्षणमेकं प्रतीक्षस्व यावदनयोर्भावमुपलभे ।

दुर्योधनः—तात किमनेनोपलम्भेन ।

( तत प्रविशतो भीमार्जुनौ । )

भीम —भो भो सुयोधनानुजीविनः किमिति सम्भ्रमादयथार्थं चरन्ति भवन्त । कथयत तावदिदमावयोरागमनं स्वामिनस्तस्य कुरुपतेः । अलमावयो शङ्कया ।

दुर्योधन —सूत, कथय गत्वोभयोरयं तिष्ठतीति ।

सूत —यथाज्ञापयति देव । तावुपसृत्य ) ननु भो वृकोदरार्जुनौ, एष महाराजस्तातेनाम्बया च सह न्यग्रोधच्छायायामुपविष्टस्तिष्ठति ।

अर्जुन —आर्य, प्रसीद । न युक्तं पुत्रशोकोपपीडितौ पितरौ पुनरस्मद्दर्शनेन भृशमुद्वेजयितुम् । तद् गच्छावः ।

भीमः—मूढ, अनुल्लङ्घनीयः समुदाचारः । न युक्तमनभिवाद्य गुरून्गन्तुम् । (उपसृत्य) सञ्जय, पित्रोर्नमस्कारं श्रावय । अथवा तिष्ठ । स्वयं विश्राव्य नामकर्मणी वन्दनीया गुरवः ।

अर्जुनः—( उपगम्य ) तात, अम्ब,

सकलरिपुजयाशा यत्र बद्धा सुतैस्ते
तृणमिव परिभूतो यस्य गर्वेण लोकः ।
रणशिरसि निहन्ता तस्य राधासुतस्य
प्रणमति पितरौ वां मध्यमः पाण्डवोऽयम् ॥ ३८ ॥

भीमः—चूर्णिताशेषकौरव्यः क्षीबो दुःशासनासृजा ।
भङ्क्ता सुयोधनस्योर्वोर्भीमोऽयं शिरसाञ्चति ॥३९॥

धृतराष्ट्रः—दुरात्मन् वृकोदर, न खल्विदं भवतैव केवलं सपत्नानामपकृतम् । यावत् क्षत्रं तावत्समरविजयिनो जिता हताश्च वीराः । तत्किमेवं विकत्थनाभिरस्मानुद्वेजयसि ।

भीमः—तात, अलं मन्युना ।

(नेपथ्ये)—भो भो भीमसेनार्जुनौ, एष खलु श्रीमानजातशत्रुर्देवो युधिष्ठिरः समाज्ञापयति ।

उभौ—किमाज्ञापयत्यार्यः ।

(पुनर्नेपथ्ये)—

कुर्वन्त्वाप्ता हतानां रणशिरसि नृणां वह्निसाद्देहभारा-
नश्रून्मिश्रं कथञ्चिद्ददतु जलममी बान्धवा बान्धवेभ्यः ।
मार्गन्तां ज्ञातिदेहान्हतनरगहने खण्डितान्गृध्रकङ्कै-
रस्तं भास्वान्प्रयातः सह रिपुभिरयं संह्रियन्तां बलानि ॥

उभौ—यदाज्ञापयत्यार्यः । ( निष्क्रान्तौ । )

(नेपथ्ये)—अरे रे गाण्डीवाकर्षणबाहुशालिन्, अर्जुन अर्जुन, क्वेदानीं गम्यते ।

कर्णक्रोधेन युष्मद्विजयि धनुरिदं त्यक्तमेतान्यहानि
प्रौढं विक्रान्तमासीद्वन इव भवतां शून्ये रणेऽस्मिन् ।

स्पर्शं स्मृत्वोत्तमाङ्गे पितुरनवजितन्यस्तहेतेरपेतः
कल्पाग्निः पाण्डवानां द्रुपदसुतचमूघस्मरो द्रौणिरस्मि ॥

धृतराष्ट्रः—( आकर्ण्य सहर्षम् ) वत्स दुर्योधन, द्रोणवधपरिभवोद्दीपितक्रोधपावकः पितुरपि समधिकबलः शिक्षावानमरोपमश्चायमश्वत्थामा प्राप्तः । तत्प्रत्युपगमनेन तावदयं सम्भाव्यतां वीरः ।

गान्धारी—जात, प्रत्युद्गच्छैनं महाभागम् ।

दुर्योधन—तात अम्ब, किमनेनाङ्गराजवधाशंसिना वृथायौवनशस्त्रबलभरेण ।

धृतराष्ट्रः—वत्स न खल्वस्मिन् काले पराक्रमवतामेवंविधानां वाङ्मात्रेणापि विरागमुत्पादयितुमर्हसि ।

( प्रविश्य ) अश्वत्थामा—विजयतां कौरवाधिपतिः ।

दुर्योधन—( उत्थाय ) गुरुपुत्र, इत आस्यताम् । ( उपवेशयति । )

अश्वत्थामा—राजन्दुर्योधन,

कर्णेन कर्णसुभगं बहु यत्तदुक्त्वा
यत्सङ्गरेषु विहितं विदितं त्वया तत् ।
द्रौणिस्त्वधिज्यधनुरापतितोऽभ्यमित्र-
मेषोऽधुना त्यज नृप प्रतिकारचिन्ताम् ॥ ४२ ॥

दुर्योधन—( साभ्यसूयम् ) आचार्यपुत्र,

अवसानेऽङ्गराजस्य योद्धव्यं भवता किल ।
ममाप्यन्ते प्रतीक्षस्व क्व कर्णः क्व सुयोधनः ॥४३॥

अश्वत्थामा—( स्वगतम् ) कथमद्यापि स एव कर्णपक्षपातः । अस्मासु च परिभवः । ( प्रकाशम् ) राजन्कौरवेश्वर, एवं भवतु । ( निष्क्रान्तः । )

धृतराष्ट्रः—वत्स, क एष ते व्यामोहो यदस्मिन्नपि काले एवंविधस्य महाभागस्याश्वत्थाम्नो वाक्पारुष्येणापरागमुत्पादयसि ।

दुर्योधन.—किमस्याप्रियमनृतं च मयोक्तम्। किं वा नेदं क्षोभस्थानम्। पश्य।

अकलितमहिमानं क्षत्रियैरात्तचापैः
समरशिरसि युष्मद्भाग्यदोषाद्विपन्नम्।
परिवदति समक्षं मित्रमङ्गाधिराजं
मम खलु कथयास्मिन्को विशेषोऽर्जुने वा ॥ ४४ ॥

धृतराष्ट्रः—वत्स, तथापि कोऽत्र दोष.। अवसानमिदानीं भरतकुलस्य। सञ्जय, किमिदानीं करोमि मन्दभाग्य.। (विचिन्त्य भवत्वेवं तावत्। सञ्जय, मद्वचनाद् ब्रूहि भारद्वाजमश्वत्थामानम्।

स्मरति न भवान्पीतं स्तन्यं विभज्य सहामुना
मम च मृदितं क्षौमं बाल्ये त्वदङ्गविवर्तनैः।
अनुजनिधनस्फीताच्छोकादतिप्रणयाच्च यद्
वचनविकृतिष्वस्य क्रोधो मुधा क्रियते त्वया ॥४५॥

सञ्जय.—यदाज्ञापयति तात। (उत्तिष्ठति।)

धृतराष्ट्रः—अपि चेदमन्यत्त्वया वक्तव्यम्।

यन्मोचितस्तव पिता वितथेन शस्त्रं
यत्तादृशः परिभव स तथाविधेऽभूत्।
एतद्विचिन्त्य बलमात्मनि पौरुषं च
दुर्योधनोक्तमपहाय विधास्यसीति ॥४६॥

सञ्जय—यदाज्ञापयति तात.। (निष्क्रान्त।)

दुर्योधन—सूत, साङ्ग्रामिकं मे रथमुपकल्पय

सूतः—यदाज्ञापयत्यायुष्मान्। (निष्क्रान्त.।)

धृतराष्ट्रः—गान्धारि, इतो वयं मद्राधिपतेः शल्यस्य शिबिरमेव गच्छाम.। वत्स, त्वमप्येवं कुरु।

(परिक्रम्य निष्क्रान्ताः सर्वे।)

---

# मरीचि-वृत्तान्तः ।

देव, त्वयि तदावतीर्णे द्विजोपकारायासुरविवरं त्वदन्वेषणप्रसृते च मित्रगणेऽहमपि महीमटन् 'अङ्गेषु गङ्गातटे बहिश्चम्पायाः कश्चिदस्ति तपःप्रभावोत्पन्नदिव्यचक्षुर्मरीचिर्नाम महर्षि' इति कुतश्चित् संलपतो जनसमाजादुपलभ्यामुतो बुभुत्सुस्त्वद्गतिं तमुद्देशमगमम् । न्यशामयं च तस्मिन्नाश्रमे कस्यचिच्चूतपोतकस्य छायायां कमप्युद्विग्नवर्णं तापसम् । अमुना चातिथिवदुपचरितः क्षणं विश्रान्तः 'क्वासौ भगवान्मरीचिः । तस्मादहमुपलिप्सुः प्रसङ्गप्रोषितस्य सुहृदो गतिम् । आश्चर्यज्ञाननिधिर्हि स महर्षिर्महीयान् विश्रुत' इत्यवादिषम् । अथासावुष्णमायतं च निःश्वस्याशंसत्— 'आसीत्तादृशो मुनिरस्मिन्नाश्रमे । तमेकदा काममञ्जरी नामाङ्गपुरीवतंसस्थानीया वारयुवतिरश्रुबिन्दुतारकितपयोधरा सनिर्वेदमभ्येत्य कीर्णशिखण्डास्तीर्णभूमिरभ्यवन्दिष्ट । तस्मिन्नेव च क्षणे मातृप्रमुखस्तदाप्तवर्गः सानुक्रोशमनुप्रधावितस्तत्रैवाविच्छिन्नपातमपतत् । स किल कृपालुस्तं जनमार्द्रया गिराश्वास्यार्तिकारणं तां गणिकामपृच्छत् । सा तु सव्रीडेव सविषादेव सगौरवेव चाब्रवीत् –'भगवन्, ऐहिकस्य सुखस्याभाजनं जनोऽयमामुष्मिकाय श्वोवसीयायाभ्युपपत्तिविश्रुतयोर्भगवत्पादयोर्मूलं शरणमभिप्रपन्न' इति । तस्यास्तु जनन्युदञ्जलिः पलितशारशिरःखण्डबन्धस्पृष्टभूमिरभाषत-'भगवन्, अस्या मे दोषमेषा वो दासी विज्ञापयति । दोषश्च मम स्वाधिकारानुष्ठापनम् । एष हि गणिकामातुरधिकारो यद्दुहितुर्जन्मनः प्रभृत्येवाङ्गक्रिया, तेजोबलवर्णमेधासंवर्धनेन

वोपाग्निधातुसाम्यकृता मितेनाहारेण शरीरपोषणम्, आपन्नमातृपरिपितुरप्यनतिदर्शनम् जन्मदिने पुण्यदिने चोत्सवोत्तरो मङ्गलविधि, अध्यापनमनङ्गविद्यानां साङ्गानाम्, नृत्यगीतवाद्यनाट्यचित्रास्वाद्यगन्धपुष्पकलासु लिपिज्ञानवचनकौशलादिषु च सम्यग्विनयनम्, शब्दहेतुसमयविद्यासु वार्तामात्रावबोधनम्, आजीवज्ञाने क्रीडाकौशले सजीव-निर्जीवासु च द्यूतकलास्वभ्यन्तरीकरणम्, यात्रोत्सवादिष्वादरप्रसाधितायाः स्फीतपरिवर्हायाः प्रकाशनम् प्रसङ्गवत्यां सङ्गीतादिक्रियायां पूर्वसंगृहीतैर्ग्राहवाग्भिः, सिद्धिलम्भनम्, दिङ्मुखेषु तस्याश्चित्कल्पवित्तकैर्यश प्रख्यापनम्, कार्तान्तिकादिभि कल्याणलक्षणोद्घोषणम्, पीठमर्दविटविदूषकैर्भिक्षुक्यादिभिश्च नागरिकसमवायेषु रूपशीलशिल्पसौन्दर्यमाधुर्यप्रस्तावना, युवजनमनोरथलक्ष्यभूतायाः प्रभूततमेन शुल्केनावस्थापनम्, स्वतो रागान्धाय तद्भावदर्शनोन्मादिताय वा जातिरूपवयोऽर्थशक्तिशौचत्यागवाद्यदाक्षिण्यशिल्पशील माधुर्योपपन्नाय स्वतन्त्राय प्रदानम्, अधिकगुणायास्वतन्त्राय प्राततमायाल्पेनापि बहुव्यपदेशेनार्पणम्, अस्वतन्त्रेण वा गान्धर्वसमागमेन तद्गुरुभ्यः शुल्कापहरणम्, अलाभेऽर्थस्य कामस्वीकृते स्वामिन्यधिकरणे च साधनम् रक्तस्य दुहितृकचाग्निणीव्रतानुष्ठापनम् नित्यनैमित्तिकप्रीतिदायकतया हृतारिष्टानां गम्यधनानां चित्रैरुपायैरपहरणम्, अदधता लुब्धप्रायेण च विगृह्यासनम्, प्रतिहस्तितप्रोत्साहनेन लुब्धस्य रागिणामत्यागशक्तिसन्धुक्षणम्, असारस्य वाक्संतस्पालीकोपक्रोशनैर्दुहितृनिरोधनैर्व्रीडोत्पादनैरन्याभियोगस्वमानैश्चापवाहनम्, अर्थदैरनर्थप्रतिघातिभिश्चानिन्द्यैरिश्वैरनुवद्धार्थानर्थसंशयान् विचार्य भूयोभूय संयोजनमिति । गणिकायाश्च सर्वथा मातुर्मातृकायाश्च

शासनानुवृत्तिः । एवं स्थितेऽसावतिक्रम्य स्वकुलधर्ममर्थनिरपेक्षा गुणेभ्य एव स्वं यौवनं विचिक्रीषते । कुलस्त्रीवृत्तमेवाच्युतमनुतिष्ठासति । गम्यजनश्च भूयानर्थयोग्यः प्रत्याचक्षाणयाऽनया प्रकोपितः । स्वकुटुम्बकं चावसादितम् । एषा कुमतिर्न कल्याणी' इति निवारयन्त्या मयि वनवासाय कोपात्प्रस्थिता । सा चेदियमहार्यनिश्चया सर्व एष जनोऽत्रैवानन्यगतिरनशनेन संस्थास्यते' इत्यरोदीत् । अथ सा चारुयुवतिस्तेन तापसेन 'भद्रे ननु दुःखाकरोऽयं वनवासः । तस्य फलमपवर्गः स्वर्गो वा । प्रथमस्तु तयोः प्रकृष्टज्ञानसाध्यः प्रायो दुस्सम्पाद एव । द्वितीयस्तु सर्वस्यैव सुलभः कुलधर्मानुष्ठायिनः । तदशक्यारम्भादुपरम्य मातुर्मते वर्तस्व' इति सानुकम्पमभिहिता 'यदीह भगवत्पादमूलमशरणम् शरणमस्तु मम कृपणाया हिरण्यरेता देव एव' इत्युदमनायत । स तु मुनिरनुविमृश्य गणिकामातरमवदत् 'सम्प्रति गच्छ गृहान् । प्रतीक्षस्व कानिचिद्दिनानि यावदियं सुकुमारा सुखोपभोगसमुचिता सत्यरण्यवासव्यसनेनोद्वेजिता भूयोभूयश्चास्माभिर्विबोध्यमाना प्रकृतावेव स्थास्यति' इति । 'तथा' इति तस्याः प्रतियाते स्वजने सा गणिका तमृषिं मन्दस्मितभक्तिदाक्षिण्यविनीयवासिनी नात्यादृतशरीरसंस्कारा वनतरुपोतालवालपूरणदेवतार्चनकुसुमोच्चयरचनप्रयासैरनेकविकल्पोपहारकर्मभिः कामशास्त्राश्च गन्धमाल्यधूपदीपनृत्यगीतवाद्यादिभिः क्रियाभिरेकान्ते च त्रिवर्गसम्बन्धिनीभिः कथाभिरध्यात्मवादैश्चानुरूपैरल्पीयसैव कालेनान्वरञ्जयत् । एकदा च रहसि रक्तं तमुपलक्ष्य 'मूढः खलु लोको यत्सह धर्मेणार्थकामावपि गणयति' इति किञ्चिदस्मयत । 'कथय वासु केनांशेनार्थकामातिशायी धर्मस्तवाभिप्रेत' इति प्रेरिता मरीचिना लज्जामन्थरमारभताभिधातुम्—'इत किल जना

भगवतस्त्रिवर्गबलाबलज्ञानम् । अथवैतदपि प्रकारान्तरं दासजनानुग्रहस्य । भवतु, श्रूयताम् । ननु धर्मादृतेऽर्थकामयोरनुत्पत्तिरेव । तदनपेक्ष एव धर्मो निवृत्तिसुखप्रसूतिहेतुरात्मसमाधानमात्रसाध्यश्च । सोऽर्थकामवद्बाह्यसाधनेषु नात्यायतते । तत्त्वदर्शनोपबृंहितश्च यथाकथंचिदप्यनुष्ठीयमानाभ्यां नार्थकामाभ्यां बाध्यते । बाधितोऽपि चाल्पायासप्रतिसमाहितस्तमपि दोषं निर्हृत्य श्रेयसेऽनल्पाय कल्पते । धर्मपूते च मनसि नभसीव न जातु रजोऽनुषज्यते । तन्मन्ये 'नार्थकामौ धर्मस्य शततमीमपि कलां स्पृशतः' इति । श्रुत्वैतदपिरुदीर्णरागवृत्तिरभ्यधात्— 'अयि विलासिनि साधु पश्यसि । किन्तु जन्मनः प्रभृत्यर्थकामवार्तानभिज्ञा वयम् । ज्ञेयौ चेमौ किंरूपौ किंपरिवारौ किंफलौ च' इति । सा त्ववादीत्— 'अर्थस्तावदर्जनवर्धनरक्षणात्मकः, कृषिपाशुपाल्यवाणिज्यसन्धिविग्रहादिपरिवारस्तीर्थप्रतिपादनफलश्च । कामस्तु विषयातिषक्तचेतसोः स्त्रीपुंसयोर्निरतिशयसुखस्पर्शविशेषः । परिवारस्त्वस्य यावदिह रम्यमुज्ज्वलं च । फलं पुनः परमाह्लादनं स्मर्यमाणमधुरमुदीरिताभिमानमकृत्रिमं सुखमपरोक्षं स्वसंवेद्यमेव । तस्यैव कृते विशिष्टस्थानशालिनः कष्टानि तपांसि महान्ति दानानि दारुणानि युद्धानि भीमानि समुद्रलङ्घनादीनि च नरा समाचरन्ति' इति । निशम्यैतन्नियतिबलान्नु तत्पाटवान्नु स्वबुद्धिमान्द्यान्नु स्वनियममनादृत्य तस्यामसौ प्रासजत् । सा सुदूरं मूढात्मानं च तं प्रवहणेन नीत्वा पुरमुदारशोभया राजवीथ्या स्वभवनमनैषीत् । अभूच्च घोषणा 'अद्य कामोत्सवः' इति । उत्तरेद्युः स्नातानुलिप्तसमारचितमञ्जुमालमारब्धकामिजनवृत्तं निवृत्तस्वव्रताभिलाषं क्षणमपि गतेऽपि तया विना दूयमानं तमुपसृद्धिमता राजमार्गेणोत्सवसमाजं नीत्वा क्वचिदुप-

यन्मोद्देशे युवतिजनशतपरिवृतस्य राज्ञ सन्निधौ स्मित-
मुखेन तेन 'भद्रे, भगवता सह निषीद' इत्यादिष्टा
सविभ्रमं कृतप्रणामा सस्मितं न्यषीदत्। तत्र काचिदुत्थाय
बद्धाञ्जलिरुत्तमाङ्गना 'देव, जितान्ययाहम्। अस्यै दास्यमद्य
प्रभृत्यभ्युपेतं मया' इति प्रभुं प्राशंसीत्। विस्मयहर्षमूलश्च
कोलाहलो लोकस्योदजिहीत। हृष्टेन च राज्ञा महार्हैः रत्नाल
ङ्कारैर्महता च परिबर्हेणानुगृह्य विसृष्टा वारमुख्याभि पौर-
मुख्यैश्च गणशः प्रशस्यमाना स्वभवनमगत्वैव तमृषिमभाषत-
'भगवन्, अयमञ्जलि। चिरमनुगृहीतोऽयं दासजन। स्वार्थे
इदानीमनुष्ठेय इति। स तु रागादर्शनिहत इवोत्क्रान्त्या-
ब्रवीत्— प्रिये, किमेतत्। कुत इदमौदासीन्यम्। क गतस्तव
मय्यसाधारणोऽनुराग इति। अथ सा सस्मितमवादीत्
भगवन् यथाद्य राजकुले मम पराजयोऽभ्युपेतस्तस्याश्च
मम च कस्मिंश्चित्सघर्षे महर्षिमरीचिमावर्जितवतीव श्लाघसे
इति तयाप्यहमभिहिता। दास्यपणबन्धेन चास्मिन्नर्थे
प्रावर्तिषि। सिद्धार्था चास्मि त्वत्प्रसादात् इति। स तया
तथावधूतो दुर्मति, कृताञ्जलय शून्यवन्न्यवतिष्ठ। यस्तत्त्वं
कृतस्तपस्वी त्वमेव मां महाभाग मन्यस्व। स्वशक्तिनिषिक्तं
रागमुद्धृत्य त्वयैव बन्धुरया महद् वैराग्यमर्पितम्। अचिरादेव
शक्य आ मा त्वदर्थसाधनतम कर्तुम्। अस्यामेव नात्यहसा
कृपुर्यां चम्पायाम्' इति।

अथ तन्मनश्च्युततम स्पर्शभियेवास्तं रविरगात्।
ऋषिमुक्तश्च राग सन्ध्यात्वेनास्फुरत्। तत्कथादत्तवैराग्या-
णीव कमलवनानि समकुचन्। अनुमतमुनिशासनस्त्वहमनु-
नैव सहोपास्य सन्ध्यामनुरूपामि कथाभिरनमनुरुध्य नीत-
रात्रि, प्रत्युन्मिषत्युदयमस्य दावकेल्पे कल्पद्रुमोत्सरसाय-
वीरिएयरणार्चिषि तं नमस्कृत्य नगरायोदचलम्।

अथ भगवन्तं मरीचिं वेशकुच्चकादुत्थाय पुनः प्रचितसततपःप्रभावप्रत्यापन्नदिव्यचक्षुषमुपसंगम्य तेनास्यैवंभूतत्वदर्शनमवगमित ।

---

## चन्द्रापीडं प्रति शुकनासस्योपदेशः ।

---

तात चन्द्रापीड, विदितवेदितव्यस्याधीतसर्वशास्त्रस्य ते नाल्पमप्युपदेष्टव्यमस्ति । केवलं निसर्गत एवाभानुभेद्यमरत्नालोकोच्छेद्यमप्रदीपप्रभापनेयमतिगहनं तमो यौवनप्रभवम् । अपरिणामोपशमो दारुणो लक्ष्मीमदः । कष्टमनञ्जनवर्तिसाध्यमपरमैश्वर्यतिमिरान्धत्वम् । अशिशिरोपचारहार्योऽत्यन्ततीव्रो दर्पदाहज्वरोष्मा । सततममूलमन्त्रगम्यो विषमो विषयविषास्वादमोहः । नित्यमस्नानशौचबध्यो बलवान्रागमलावलेपः । अजस्रमक्षपावसानप्रबोधा घोरा च राज्यसुखसंनिपातनिद्रा भवति । इत्यतो विस्तरेणाभिधीयसे । गर्भेश्वरत्वमभिनवयौवनत्वमप्रतिमरूपत्वममानुषशक्तित्वं चेति महतीयं खल्वनर्थपरम्परा । सर्वाविनयानामेकैकमप्येषामायतनम् । किमुत समवायः । यौवनारम्भे च प्रायः शास्त्रजलप्रक्षालननिर्मलापि कालुष्यमुपयाति बुद्धिः । अनुज्झितधवलतापि सरागैव भवति यूनां दृष्टिः । अपहरति च वात्येव शुष्कपत्रं समुद्भूतरजोभ्रान्तिरतिदूरमात्मेच्छया यौवनसमये पुरुषं प्रकृतिः । इन्द्रियहरिणहारिणी च सततमतिदुरन्तेयमुपभोगमृगतृष्णिका । नवयौवनकषायितात्मनश्च स-

विलीनानीव तान्येव विषयस्वरूपाण्यास्वाद्यमानानि मधुरतरा
ण्यापतन्ति मनसः । नाशयति च दिङ्मोह इवोन्मार्गप्रवर्तकः
पुरुषमत्यासङ्गो विषयेषु । भवादृशा एव भवन्ति भाजनान्यु
पदेशानाम् । अपगतमले हि मनसि स्फटिकमणाविव रज
निकरगभस्तयो विशन्ति सुखमुपदेशगुणाः । गुरुवचनममल
मपि सलिलमिव महदुपजनयति श्रवणस्थितं शूलमभव्यस्य ।
इतरस्य तु करिण इव शङ्खाभरणमाननशोभासमुदयमधिक
तरमुपजनयति । हरति च सकलमतिमलिनमप्यन्धकारमिव
दोषजातं प्रदोषसमयनिशाकर इव गुरूपदेशः । प्रशमहेतुर्वय
परिणाम इव पलितरूपेण शिरसिजजालममलीकुर्वन्गुणरूपेण
तदेव परिणमयति । अयमेव चानास्वादितविषयरसस्य ते
काल उपदेशस्य । कुसुमशरशरप्रहारजर्जरिते हि हृदये जल-
मिव गलत्युपदिष्टम् । अकारणं च भवति दुष्प्रकृतेरन्वय
श्रुतं वा विनयस्य । चन्दनप्रभवो न दहति किमनलः । किं वा
प्रशमहेतुनापि न प्रचण्डतरीभवति वडवानलो वारिणा ।
गुरूपदेशश्च नाम पुरुषाणामखिलमलप्रक्षालनक्षममजलं स्ना
नमनुपजातपलितादिवैरूप्यमजरं वृद्धत्वमनारोपितमेदोदोषं
गुरुकरणमसुवर्णविरचनमग्राम्यं कर्णाभरणमतीतज्योतिरा-
लोको नोद्वेगकरः प्रजागरः । विशेषेण तु राज्ञाम् । विरला हि
तेषामुपदेष्टारः । प्रतिशब्दक इव राजवचनमनुगच्छति जनो
भयात् । उद्दामदर्पश्वयथुस्थगितश्रवणविवराश्चोपदिश्यमान-
मपि ते न शृण्वन्ति । शृण्वन्तोऽपि च गजनिमीलितेनावधी-
रयन्तः खेदयन्ति हितोपदेशदायिनो गुरून् । अहङ्कारदाहज्वर-
मूर्छान्धकारिता विह्वला हि राजप्रकृतिः । अर्थाभिमानो
न्मादकारीणि धनानि । राज्यविषविकारतन्द्राप्रदा राजलक्ष्मीः ।

आलोकयतु तावत्कल्याणाभिनिवेशी लक्ष्मीमेव प्रथमम् ।
इयं हि सुभटखड्गमण्डलोत्पलवनविभ्रमभ्रमरी लक्ष्मीः क्षीर-

सागरात्पारिजातपल्लवेभ्यो रागमिन्दुशकलादेकान्तवक्रतामुच्चैःश्रवसश्चञ्चलतां कालकूटान्मोहनशक्तिं मदिराया मदं कौस्तुभमणेरतिनैष्ठुर्यमित्येतानि सहवासपरिचयवशाद्विरहविनोदचिह्नानि गृहीत्वेवोद्गता। न ह्येवंविधमपरमपरिचितमिह जगति किञ्चिदस्ति यथेयमनार्या। लब्धापि खलु दुःखेन परिपाल्यते। दृढगुणपाशसन्दाननिष्पन्दीकृतापि नश्यति। उद्दाममदर्पभटसहस्रोल्लासितासिलतापञ्जरविधृताप्यपक्रामति। मदजलदुर्दिनान्धकारगजघटितघनघटापरिपालितापि प्रपलायते। न परिचयं रक्षति। नाभिजनमीक्षते। न रूपमालोकयते। न कुलक्रममनुवर्तते। न शीलं पश्यति। न वैदग्ध्यं गणयति। न श्रुतमाकर्णयति। न धर्ममनुरुध्यते। न त्यागमाद्रियते। न विशेषज्ञतां विचारयति। नाचारं पालयति। न सत्यमनुबुध्यते। न लक्षणं प्रमाणीकरोति। गन्धर्वनगरलेखेव पश्यत एव नश्यति। अद्याप्यारूढमन्दरपरिवर्तावर्तभ्रान्तिजनितसंस्कारेव परिभ्रमति। कमलिनीसञ्चरणव्यतिकरलग्ननलिननालकण्टकेव न क्वचिन्निर्भरमाबध्नाति पदम्। अतिप्रयत्नविधृतापि परमेश्वरगृहेषु विविधगन्धगजगण्डमधुपानमत्तेव परिस्खलति। पारुष्यमिवोपशिक्षितुमसिधारासु निवसति। विश्वरूपत्वमिव ग्रहीतुमाश्रिता नारायणमूर्तिम्। अप्रत्ययबहुला च दिवसान्तकमलमिव समुपचितमूलदण्डकोषमण्डलमपि मुञ्चति भूभुजम्। गङ्गेव वसुजनन्यपि तरङ्गबुद्बुदचञ्चला। दिवसकरगतिरिव प्रकटितविविधसंक्रान्तिः। पातालगुहेव तमोबहुला। हिडिम्बेव भीमसाहसैकहार्यहृदया। प्रावृडिवाचिरद्युतिकारिणी। दुष्टपिशाचीव दर्शितानेकपुरुषोच्छ्राया स्वल्पसत्त्वमुन्मत्तीकरोति। सरस्वतीपरिगृहीतमीर्ष्ययेव नालिङ्गति जनम्। गुणवन्तमपवित्रमिव न स्पृशति। उदारसत्त्वममङ्गलमिव न बहु मन्यते।

सुजनमनिमित्तमिव न पश्यति। अभिजातमहिमिव लङ्घयति । शूरं कण्टकमिव परिहरति । दातारं दुःस्वप्नमिव न स्मरति । विनीतं पातकिनमिव नोपसर्पति । मनस्विनमुन्मत्तमिवोपहसति । परस्परविरुद्धं चेन्द्रजालमिव दर्शयन्ती प्रकटयति जगति निजं चरितम् । तथा हि । सततमूष्माणमारोपयन्त्यपि जाड्यमुपजनयति । उन्नतिमादधानापि नीचस्वभावतामाविष्करोति । तोयराशिसम्भवापि तृष्णां संवर्धयति । ईश्वरतां दधानाप्यशिवप्रकृतित्वमातनोति । बलोपचयमाहरन्त्यपि लघिमानमापादयति । अमृतसहोदरापि कटुकविपाका । विग्रहवत्यप्यप्रत्यक्षदर्शना । पुरुषोत्तमरतापि खलजनप्रिया । रेणुमयीव स्वच्छमपि कलुषीकरोति । यथा यथा चेयं चपला दीप्यते तथा तथा दीपशिखेव कज्जलमलिनमेव कर्म केवलमुद्वमति । तथा हीयं संवर्धनवारिधारा तृष्णाविषवल्लीनां व्याधगीतिरिन्द्रियमृगाणां परामर्शधूमलेखा सच्चरितचित्राणां विभ्रमशय्या मोहदीर्घनिद्राणां निवासजीर्णवलभी धनमदपिशाचिकानां तिमिरोद्गतिः शास्त्रदृष्टीनां पुरःपताका सर्वाविनयानामुत्पत्तिनिम्नगा क्रोधावेगग्राहाणामापानभूमिर्विषयमधूनां सङ्गीतशाला भ्रूविकारनाट्यानामावासदरी दोषाशीविषाणामुत्सारणवेत्रलता सत्पुरुषव्यवहाराणामकालप्रावृड् गुणकलहंसकानां विसर्पणभूमिर्लोकापवादविस्फोटकानां प्रस्तावना कपटनाटकस्य कदलिका कामकरिणो वध्यशाला साधुभावस्य राहुजिह्वा धर्मेन्दुमण्डलस्य । न हि तं पश्यामि यो ह्यपरिचितयानया न निर्भरमुपगूढो यो वा न विप्रलब्धः । नियतमियमालेख्यगतापि चलति पुस्तकमय्यपीन्द्रजालमाचरति उत्कीर्णापि विप्रलभते श्रुताप्यभिसन्धत्ते चिन्तितापि वञ्चयति ।

एवंविधयापि चानया दुराचारया कथमपि दैववशेन परि

गृहीता विक्लवीभवन्ति राजानः। सर्वाविनयाधिष्ठानतां च गच्छन्ति। तथाहि। अभिषेकसमय एवैषां मङ्गलकलशजलैरिव प्रक्षाल्यते दाक्षिण्यम्। अग्निकार्यधूमेनेव मलिनीभवति हृदयम्। पुरोहितकुशाग्रसंमार्जनीभिरिवापनीयते क्षान्तिः। उष्णीषपट्टबन्धेनेवाच्छाद्यते जरागमनस्मरणम्। आतपत्रमण्डलेनेवापवार्यते परलोकदर्शनम्। चामरपवनैरिवापह्रियते सत्यवादिता। वेत्रदण्डैरिवोत्सार्यन्ते गुणाः। जयशब्दकलकलैरिव तिरस्क्रियन्ते साधुवादाः। ध्वजपटपल्लवैरिव परामृश्यते यशः। तथाहि। केचिच्छ्रमवशशिथिलशकुनिगलपुटचपलाभिः खद्योतोन्मेषमुहूर्तमनोहराभिर्मनस्विजनगर्हिताभिः सम्पद्भिः प्रलोभ्यमाना धनलवलाभावलेपविस्मृतजन्मानोऽनेकदोषोपचितेन दुष्टासृजेव रागावेशेन बाध्यमाना विविधविषयग्रासलालसैः पञ्चभिरप्यनेकसहस्रसंख्यैरिवेन्द्रियैरायास्यमाना प्रकृतिचञ्चलतया लब्धप्रसरेणैकेनापि शतसहस्रतामिवोपगतेन मनसाकुलीक्रियमाणा विह्वलतामुपयान्ति। ग्रहैरिव गृह्यन्ते। भूतैरिवाभिभूयन्ते। मन्त्रैरिवावेश्यन्ते। सत्त्वैरिवावष्टभ्यन्ते। वायुनेव विडम्ब्यन्ते। पिशाचैरिव ग्रस्यन्ते। मदनशरैर्मर्माभिहता इव मुखभङ्गसहस्राणि कुर्वते। धनोष्मणा पच्यमाना इव तिर्यक्परिभ्रमन्ति। अधर्मभग्नगतयः पङ्गव इव परेण सञ्चार्यन्ते। मृषावादविपाकसञ्जातमुखरोगा इवातिकृच्छ्रेण जल्पन्ति। सप्तच्छदतरव इव कुसुमरजोविकारैरासन्नवर्तिनां शिरःशूलमुत्पादयन्ति। आसन्नमृत्यव इव बन्धुजनमपि नाभिजानन्ति। उत्कुपितलोचना इव तेजस्विनो नेक्षन्ते। कालदष्टा इव महामन्त्रैरपि न प्रतिबुध्यन्ते। जातुषाभरणानीव सोष्माणं न सहन्ते। दुष्टवारणा इव महामानस्तम्भनिश्चलीकृता न गृह्णन्त्युपदेशम्। तृष्णाविषमूर्छिता कनकमयमिव सर्वं

पश्यन्ति। इषव इव पानवर्द्धिततैक्ष्ण्याः परप्रेरिता विनाशयन्ति। दूरस्थितान्यपि फलानीव दण्डविक्षेपैर्महाकुलानि शातयन्ति। अकालकुसुमप्रसवा इव मनोहराकृतयोऽपि लोकविनाशहेतवः। श्मशानाग्नय इवातिरौद्रभूतयः। तैमिरिका इवादूरदर्शिनः। उपसृष्टा इव क्षुद्राधिष्ठितभवनाः। श्रूयमाणा अपि प्रेतपटहा इवोद्वेजयन्ति। चिन्त्यमाना अपि महापातकाध्यवसाया इवोपद्रवमुपजनयन्ति। अनुदिवसमापूर्यमाणाः पापेनेवाध्मातमूर्तयो भवन्ति। तदवस्थाश्च व्यसनशतशरव्यतामुपगता वल्मीकतृणाग्रावस्थिता जलबिन्दव इव पतितमप्यात्मानं नावगच्छन्ति।

अपरे तु स्वार्थनिष्पादनपरैर्धनपिशितग्रासगृध्रैरास्थाननलिनीबकैर्धूर्तैर्द्यूतं विनोद इति मृगया श्रम इति पानं विलास इति प्रमत्तता शौर्यमिति दारपरित्यागोऽव्यसनितेति गुरुवचनावधीरणमपरप्रणेयत्वमित्यजितभृत्यता सुखोपसेव्यत्वमिति नृत्यगीतवाद्यवेश्याभिसक्ती रसिकतेति महापराधानवकर्णनं महानुभावतेति परिभवसहत्वं क्षमेति स्वच्छन्दता प्रभुत्वमिति देवावमाननं महासत्त्वतेति बन्दिजनख्यातिर्यश इति तरलतोत्साह इत्यविशेषज्ञतापक्षपातित्वमिति दोषानपि गुणपक्षमध्यारोपयद्भिरन्तः स्वयमपि विहसद्भिः प्रतारणकुशलैर्धूर्तैरमानुषोचिताभिः स्तुतिभिः प्रतार्यमाणा वित्तमदमत्तचित्ता निश्चेतनतया तथैवेत्यात्मन्यारोपितालीकाभिमाना मर्त्यधर्माणोऽपि दिव्यांशावतीर्णमिव सदैवतमिवातिमानुषमात्मानमुत्प्रेक्षमाणाः प्रारब्धदिव्योचितचेष्टानुभावाः सर्वजनस्योपहास्यतामुपयान्ति। आत्मविडम्बनां चानुजीविना जनेन क्रियमाणामभिनन्दन्ति। मनसा देवताध्यारोपणप्रतारणादसद्भूतसम्भावनोपहताश्चान्तःप्रविष्टापरभुजद्वयमिवात्मबाहुयुगलं सम्भावयन्ति। त्वगन्तरिततृतीय-

लोचनं स्वललाटमाशङ्कन्ते । दर्शनप्रदानमप्यनुग्रहं गणयन्ति । दृष्टिपातमप्युपकारपक्षे स्थापयन्ति । सम्भाषणमपि संविभागमध्ये कुर्वन्ति । आज्ञामपि वरप्रदानं मन्यन्ते । स्पर्शमपि पावनमाकलयन्ति । मिथ्यामाहात्म्यगर्वनिर्भराश्च न प्रणमन्ति देवताभ्यः । न पूजयन्ति द्विजातीन् । न मानयन्ति मान्यान् । नार्चयन्त्यर्चनीयान् । नाभिवादयन्त्यभिवादनार्हान् । नाभ्युत्तिष्ठन्ति गुरून् । अनर्थकायासान्तरितविषयोपभोगसुखमित्युपहसन्ति विद्वज्जनम् । जरावैक्लव्यप्रलपितमिति पश्यन्ति वृद्धजनोपदेशम् । आत्मप्रज्ञापरिभव इत्यसूयन्ति सचिवोपदेशाय । कुप्यन्ति हितवादिने । सर्वथा तमभिनन्दन्ति तमालपन्ति तं पार्श्वे कुर्वन्ति तं संवर्धयन्ति तेन सह सुखमवतिष्ठन्ते तस्मै ददति तं मित्रतामुपनयन्ति तस्य वचनं शृण्वन्ति तत्र वर्षन्ति तं बहु मन्यन्ते तमाप्ततामापादयन्ति योऽहर्निशमनवरतमुपरचिताञ्जलिरधिदैवतमिव विगतान्यकर्तव्यः स्तौति यो वा माहात्म्यमुद्भावयति । किं वा तेषां साम्प्रतं येषामतिनृशंसप्रायोपदेशनिर्घृणं कौटिल्यशास्त्रं प्रमाणमभिचारक्रियाक्रूरैकप्रकृतयः पुरोधसो गुरवः पराभिसन्धानपरा मन्त्रिण उपदेष्टारो नरपतिसहस्रभुक्तोज्झितायां लक्ष्म्यामासक्तिर्मारणात्मकेषु शास्त्रेष्वभियोगः सहजप्रेमार्द्रहृदयानुरक्ता भ्रातर उच्छेद्याः ।

तदेवंप्रायेऽतिकुटिलकष्टचेष्टासहस्रदारुणे राज्यतन्त्रेऽस्मिन्महामोहकारिणि च यौवने, कुमार, तथा प्रयतेथा यथा नोपहस्यसे जनैर्न निन्द्यसे साधुभिर्न धिक्क्रियसे गुरुभिर्नोपालभ्यसे सुहृद्भिर्न शोच्यसे विद्वद्भिः, यथा च न प्रतार्यसे कुशलैर्नास्वाद्यसे भुजङ्गैर्नावलुप्यसे सेवकवृकैर्न वञ्च्यसे धूर्तैर्न प्रलोभ्यसे वनिताभिर्न विडम्ब्यसे लक्ष्म्या न नर्त्यसे मदेन नोन्मत्तीक्रियसे मदनेन नाक्षिप्यसे विषयैर्न विकृष्यसे

रागेण नापह्रियसे सुखेन । कामं भवान्प्रकृत्यैव धीर । पित्रा च महता प्रयत्नेन समारोपितसंस्कार । तरलहृदयमप्रतिबुद्ध च मदयन्ति धनानि । तथापि भवद्गुणसन्तोषो मामेव मुखरीकृतवान् । इदमेव च पुन पुनरभिधीयसे । विद्वांसमपि सचेतनमपि महासत्त्वमप्यभिजातमपि धीरमपि प्रयत्नवन्तमपि पुरुषमियं दुर्विनीता खलीकरोति लक्ष्मीरिति । सर्वथा कल्याणैः पित्रा क्रियमाणमनुभवतु भवान्नवयौवराज्याभिषेकमङ्गलम् । कुलक्रमागतामुद्वह पूर्वपुरुषैरूढां धुरम् । अवनमय द्विषतां शिरांसि । उन्नमय बन्धुवर्गम् । अभिषेकानन्तरं च प्रारब्धदिग्विजय परिभ्रमन्विजितामपि तव पित्रा सप्तद्वीपभूषणां पुनर्विजयस्व वसुन्धराम् । अयं च ते कालः प्रतापमारोपयितुम् । आरूढप्रतापो हि राजा त्रैलोक्यदर्शीव सिद्धादेशो भवति ।

## महाश्वेता–वृत्तान्तः ।

राजपुत्र, स्मिनेनातिनिर्घृणहृदयाया मम मन्दभाग्याया पापाया जन्मन प्रभृति वैराग्यवृत्तान्तेनाश्रवणीयेन श्रुतेन । तथापि यदि महत्कुतूहलं तत्कथयामि । श्रूयताम् ।

एतत्प्रायेण कल्याणाभिनिवेशिन श्रुतिविषयमापतितमेव यथा विबुधसद्मन्यप्सरसो नाम कन्यका सन्ति । तासां चतुर्दश कुलानि । एकं भगवत कमलयोनेर्मनस समुत्पन्नम् । अन्यद्वेदेभ्य सम्भूतम् । अन्यदग्नेरुद्भूतम् । अन्यत्पवनात्प्रसूतम् । अन्यदमृतान्मथ्यमानादुत्थितम् । अन्यज्जलाज्जातम् । अन्य-

दर्ककिरणेभ्यो निर्गतम्। अन्यत्सोमरश्मिभ्यो निष्पतितम्। अन्यद्भूमेरुद्भूतम्। अन्यत्सौदामिनीभ्यः प्रवृत्तम्। अन्यन्मृत्युना निर्मितम्। अपरं मकरकेतुना समुत्पादितम्। अन्यत् तु दक्षस्य प्रजापतेरतिप्रभूतानां कन्यकानां मध्ये द्वे सुते मुनिररिष्टा च बभूवतुस्ताभ्यां गन्धर्वैः सह कुलद्वयं जातम्। एवमेतान्येकत्र चतुर्दश कुलानि। गन्धर्वाणां तु दक्षात्मजाद्वितयसम्भवं तदेव कुलद्वयं जातम्। अत्र मुनेस्तनयश्चित्रसेनादीनां पञ्चदशानां भ्रातॄणामधिको गुणैः षोडशश्चित्ररथो नाम समुत्पन्नः। स किल सकलत्रिभुवनप्रख्यातपराक्रमो भगवता समस्तसुरमौलिमालालालितचरणनलिनेनाखण्डलेन सुहृच्छब्देनोपबृंहितप्रभावः सर्वेषां गन्धर्वाणामाधिपत्यमसिलताभरीचिनिचयमेचकितेन बाहुना समुपार्जितं शैशव एवासवान्। इतश्च नातिदूरे तस्यास्माद्भारतवर्षादुत्तरेणानन्तरे किम्पुरुषनाम्नि वर्षे वर्षपर्वतो हेमकूटो नाम निवासः। तत्र च तद्भुजयुगपरिपालितान्यनेकानि गन्धर्वशतसहस्राणि प्रतिवसन्ति। तेनैव चेदं चैत्ररथं नामातिमनोहरं काननं निर्मितम्। इदं चाच्छोदाभिधानमतिमहत्सरः खानितम्। अयं च भवानीपतिरुपरचितो भगवान्। अरिष्टायास्तु पुत्रस्तुम्बुरुप्रभृतीनां सोदर्याणां षण्णां ज्येष्ठो हंसो नाम जगद्विदितो गन्धर्वस्तस्मिन्द्वितीये गन्धर्वकुले गन्धर्वराजेन चित्ररथेनैवाभिषिक्तो बाल एव राज्यपदमासादितवान्। अपरिमितगन्धर्वबलपरिवारस्य तस्यापि स एव गिरिरधिवासः। यत्तु तत्सोममयूखसम्भवमप्सरसां कुलं तस्मात्किरणजालानुसारगलितेन सकलेनेव रजनिकरकलाकलापलावण्येन निर्मिता त्रिभुवननयनाभिरामा भगवती द्वितीयेव गौरी गौरीति नाम्ना हिमकरकिरणावदातवर्णा कन्यका प्रसूता। तां च द्वितीयगन्धर्वकुलाधिपतिर्हंसो मन्दाकिनीमिव क्षीरसागरः प्रणयिनीमकरोत्। सा तु भगवता

मकरकेतुनेव रति शरत्समयेनेव कमलिनी हंसेन संयोजिता सदृशसमागमोपजनितामतिनिर्वृतां मुदमुपगतवती । निखिलान्तःपुरस्वामिनी च तस्याभवत् । तयोश्च तादृशयोर्महात्मनोरहमीदृशी विगतलक्षणा शोकाय केवलमनेकदुःखसहस्रभाजनमेकैवात्मजा समुत्पन्ना । तातस्त्वनपत्यतया सुतजन्मातिरिक्तेन महोत्सवेन मज्जन्माभिनन्दितवान् । अवाप्ते च दशमेऽहनि कृतयथोचितसमाचारो महाश्वेतेति यथार्थमेव नाम कृतवान् । साहं पितृभवने बालतया कलमधुरप्रलापिनी वीणेव गन्धर्वाणामङ्कादङ्कं सञ्चरन्त्यविदितस्नेहशोकायासमनोहरं शैशवमतिनीतवती । क्रमेण च कृतं मे वपुषि वसन्त इव मधुमासेन मधुमास इव नवपल्लवेन नवपल्लव इव कुसुमेन कुसुम इव मधुकरेण मधुकर इव मदेन नवयौवनेन पदम् ।

अथ सकलजीवलोकहृदयानन्ददायकेषु मधुमासदिवसेष्वेकदाहमम्बया सह मधुमासविस्तारितशोभं प्रोत्फुल्लनवनलिनकुमुदकुवलयकह्लारमिदमच्छोदं सरः स्नातुमभ्यागमम् । अत्र च स्नानार्थमागतया भगवत्या पार्वत्या तटशिलातलेषु विलिखितानि सभृङ्गिरिटीनि पांसुनिमग्नकृशपदमण्डलानुमितमुनिजनप्रणामप्रदक्षिणानि त्र्यम्बकप्रतिबिम्बकानि वन्दमाना भ्रमरभरभुग्नगर्भकेसरजर्जरकुसुमोपहाररम्योऽयं लतामण्डपः, परभृतनखकोटिपाटितकुड्मलरागलग्नविवरनिर्गलितमधुधारः सुपुष्पितोऽयं सहकारतरुः, उन्मदमयूरकुलकलकलभीतभुजङ्गमुक्तलता शिशिरेयं चन्दनवीथिका, विकचकुसुमपुञ्जपातसूचितवनदेवताप्रेङ्खोलनयोग्यासनेयं रागद्रोणी, बहलकुसुमरजःपटलमग्नराजहंसपदलेखमतिरमणीयमिदं तीरतरुतलम्, इति स्निग्धमनोहरतरोद्देशदर्शनलोभाक्षिप्तहृदया सह सखीजनेन व्यचरम् ।

एकस्मिंश्च प्रदेशे झटिति वनानिलेनोपनीतं निर्भरविकसितेऽपि काननेऽभिभूतान्यकुसुमपरिमलं विसर्पन्तमतिसुरभितयानुलिम्पन्तमिव तर्पयन्तमिव पूरयन्तमिव घ्राणेन्द्रियमहमहमिकया मधुकरकुलैरनुबध्यमानमनाघ्रातपूर्वममानुषलोकोचितं कुसुमगन्धमभ्यजिघ्रम् । कुतोऽयमित्युपारूढकुतूहला चाहं मुकुलितलोचना तेन कुसुमगन्धेन मधुकरीवाकृष्यमाणा

श्रमशिरःशशाङ्कमिव धृतव्रतम्, त्र्यम्बकलोचनं वशीकर्तुकामं काममिव सनियमम्, अनिमिषन्त्या देहप्रभया कनकमयमिव तं प्रदेशं कुर्वाणम्, रोचनारसलुलितप्रतिसरसमानसुकुमारपिङ्गलजटम्, पुण्यपताकायमानया भस्मललाटिकया वालपुलिनलेखयेव गङ्गाप्रवाहमुद्भासमानम्, तपस्तडागकमलिनीमृणालेनेव यज्ञोपवीतेनालङ्कृतम्, एकेन सनालबकुलफलाकारं कमण्डलुमपरेण स्फटिकाक्षमालिकां करेण कलयन्तम्, मौञ्जमेखलागुणेन परिक्षिप्तजघनभागम्, अभ्रगङ्गास्रोतोजलप्रक्षालितेन जरच्चकोरलोचनपुटपाटलकान्तिना मन्दारवल्कलेनोपपादिताम्बरप्रयोजनम्, अलङ्कारमिव ब्रह्मचर्यस्य, यौवनमिव धर्मस्य, विलासमिव सरस्वत्याः, स्वयंवरपतिरिव सर्वविद्यानां, सङ्केतस्थानमिव सर्वश्रुतीनां, निदाघकालमिव सापाढं, हिमसमयकाननमिव स्फुटितप्रियङ्गुमञ्जरीगौरम्, मधुमासमिव कुसुमधवलतिलकभूतिभूषितमुखम्, आत्मानुरूपेण सवयसापरेण देवतार्चनकुसुमान्युच्चिन्वता तापसकुमारेणानुगतम्, अतिमनोहरं स्नानार्थमागतं मुनिकुमारकमपश्यम् ।

तेन च कर्णावतंसीकृतां वसन्तदर्शनानन्दितायाः स्मित-

प्रभामिव वनश्रियः, मलयमारुतागमनार्घलाजाञ्जलिमिव मधुमासस्य, यौवनलीलामिव कुसुमलक्ष्म्याः, कृत्तिकातारास्तबकानुकारिणीम्, अमृतबिन्दुनिस्यन्दिनीम्, अदृष्टपूर्वां कुसुममञ्जरीमद्राक्षम् । अस्याः परिभूतान्यकुसुमामोदो नन्वयं परिमल इति मनसा निश्चित्य तं तपोधनयुवानमीक्षमाणाहमचिन्तयम्—'अहो रूपातिशयनिष्पादनोपकरणकोषस्याक्षीणता विधातुः। यत् त्रिभुवनाद्भुतरूपसम्भारं भगवन्तं कुसुमायुधमुत्पाद्य तदाकारातिरिक्तरूपराशिरयमपरो मुनिमायामयो मकरकेतुरुत्पादितः। मन्ये च सकलजगन्नयनानन्दकरं शशिबिम्बं विरचयता लक्ष्मीलीलावासभवनानि कमलानि सृजता प्रजापतिना प्रथममेतदाननाकारकरणकौशलाभ्यास एव कृतः। अन्यथा किमिव हि सदृशवस्तुविरचनायां कारणम्। अलीकं चेदं यथा किल सकलाः कलाः कलावतो बहुलपक्षे क्षीयमाणस्य सुषुम्णानाम्ना रश्मिना रविरापिबतीति। ताः खल्वस्य गभस्तयः समस्ता वपुरिदमाविशन्तीति। कुतोऽन्यथा रूपापहारिणि क्लेशबहुले तपसि वर्तमानस्येदं लावण्यम्।' इति विचिन्तयन्तीमेव मामविचारितगुणदोषविशेषो रूपैकपक्षपाती नवयौवनसुलभः कुसुमायुधः कुसुमासवमद इव मधुकरीं परवशामकरोत्।

उच्छ्वसितैः सह विस्मृतनिमेषेण किञ्चिदामुकुलितपक्ष्मणा जिह्मिततरलतरताराशारोदरेण दक्षिणेन चक्षुषा सस्पृहमापिबन्तीव किमपि याचमानेव त्वदायत्तास्मीति वदन्तीवाभिमुखं हृदयमर्पयन्तीव सर्वात्मनानुप्रविशन्तीव तन्मयतामिव गन्तुमीहमाना मनोभुवाभिभूतां त्रायस्वेति शरणमिवोपयान्ती देहि हृदयेऽवकाशमित्यर्थितामिव दर्शयन्ती हा हा किमिदमसाम्प्रतमतिह्रेपणमकुलकुमारीजनोचितमिदं मया प्रस्तुतमिति जानानाप्यप्रभवन्ती करणानां स्तम्भितेव लिखितेवोत्की-

णेव संयतेव मूर्च्छितेव केनापि विधृतेव निष्पन्दसकलावयवा तत्कालाविर्भूतेनावष्टम्भेनाकथितशिक्षितेनानाख्येयेन स्वसंवेद्येन केवलं न विभाव्यते किं तद्रूपसम्पदा किं मनसा किं मनसिजेन किमभिनवयौवनेन किमनुरागेणैवोपदिश्यमाना किमन्येनैव केनापि प्रकारेणाहमपि न जानामि कथं कथमिति तमतिचिरं व्यलोकयम्। उत्क्षिप्य नीयमानेव तत्समीपमिन्द्रियैः पुरस्तादाकृष्यमाणेव हृदयेन पृष्ठतः प्रेर्यमाणेव पुष्पधन्वना कथमपि मुहुःप्रयत्नगत्यात्मानमधारयम्। अनन्तरं च मेऽन्तर्मदनावकाशमिव दातुमाहितसन्तानाः निरीयुः श्वासमरुतः। स्वेदसलिललवसंसादालितेवागलल्लज्जा। मकरध्वजनिशितशरनिकरनिपातत्रस्तेवाकम्पत गात्रयष्टिः। तद्रूपातिशयं द्रष्टुमिव कुतूहलादङ्गेभ्यो निरगाद्रोमाञ्चजालकम्। अशेषतः स्वेदाम्भसा धौतचरणयुगलादिव हृदयमविशद्रागः।

आसीच्च मम मनसि—'शान्तात्मनि दूरीकृतमदनव्यतिकरेऽस्मिन्जने मां निक्षिपता किमिदमनार्येणासदृशमारब्धं मनसिजेन। एवं च नामातिमूढं हृदयमङ्गनाजनस्य यदनुरागविषययोग्यतामपि विचारयितुं नालम्। क्वेदमतिभास्वरं धाम तेजसां तपसां च। क्व च प्राकृतजनाभिनन्दितानि मन्मथपरिस्पन्दितानि। नियतमयं मामेवं मकरलाञ्छनेन विडम्ब्यमानामुपहसति मनसा। चित्रं चेदं यदहमेवमवगच्छन्त्यपि न शक्नोम्यात्मनो विकारमुपसंहर्तुम्। अन्या अपि कन्यकास्त्रपामपहाय स्वयमुपसृताः पतीन्। अन्या अप्यनेन दुर्विनीतेन मन्मथेनोन्मत्ततां नीता नार्यः। न पुनरहमेका यथा। कथमनेन क्षणेनाकारमात्रालोकनाकुलीभूतमेवमस्ववश्यतामुपगतमन्तःकरणम्। कालो हि गुणाश्च दुर्निवारतामारोपयन्ति मदनस्य सर्वथा। यावदेव सचेतनास्मि यावदेव

यमस्य सहचरं मुनिबालकं प्रणामपूर्वकमपृच्छम्—'भगवन्, किमभिधानः कस्य चायं तपोधनयुवा। किन्नाम्नस्तरोरियमनेनावतंसीकृता कुसुममञ्जरी। जनयति हि मे मनसि महत्कौतुकमस्याः समुत्सर्पन्नसाधारणसौरभोऽयमनाघ्रातपूर्वो गन्धः' इति। स तु मामीषद्विहस्याब्रवीत्—'बाले, किमनेन पृष्टेन प्रयोजनम्। अथ कौतुकमावेदयामि। श्रूयताम्।

अस्ति खलु सकलत्रिभुवनप्रख्यातकीर्तिरत्युदारतया सुरासुरसिद्धवृन्दवन्दितचरणयुगलो महामुनिर्दिव्यलोकनिवासी श्वेतकेतुर्नाम। तस्यायमात्मजः। पुण्डरीक इति नाम। इयं च सुरासुरैर्मथ्यमानात् क्षीरसागरादुद्गतः पारिजातनामा पादपस्तस्य मञ्जरी। यथा चैषा व्रतविरुद्धमस्य श्रवणसंसर्गमासादितवती तदपि कथयामि। अद्य चतुर्दशीति भगवन्तमम्बिकापतिं कैलासगतमुपासितुममरलोकान्मया सह नन्दनवनसमीपेनायमनुसरन्नभिगत्य सान्द्रमधुमासलक्ष्मीहस्तललितहस्तावलम्बया बकुलमालिकामेखलया कुसुमपल्लवग्रथिताभिराजानुलम्बिनीभिः कण्ठमालिकाभिर्निरन्तराच्छादितविग्रहया नवचूताङ्कुरकर्णपूरया पुष्पासवपानमत्तया नन्दनवनदेवतया पारिजातकुसुममञ्जरीमिमामादाय प्रणम्याभिहितः—'भगवन्, सकलत्रिभुवनदर्शनाभिरामायास्तवाकृतेरस्याः सदृशोऽयमलङ्कारः। प्रसीद, क्रियताम्। इयमवतंसविलासदुर्ललिता समारोप्यतां श्रवणशिखरम्। भजतु सफलतां जन्म पारिजातस्य।' इत्येवमभिदधानां चायमात्मरूपस्तुतिवादत्रपाघनमितविलोचनस्तामनादृत्यैव गन्तुं प्रवृत्तः। मया तु तामनुयान्तीमालोक्य 'को दोषः सखे, क्रियतामस्याः प्रणयपरिग्रहः' इत्यभिधाय बलादिच्छन्तमनिच्छतोऽप्यस्य कर्णपूरीकृता। तदेतत्कार्त्स्न्येन योऽयं या चेयं यथा चास्य श्रवणशिखरं समारूढा तत्सर्वमावेदितम्।'

इत्युक्तवति तस्मिंस्तपोधनयुवा किञ्चिदुपदर्शितस्मितो मामवादीत्-'अयि कुतूहलिनि, किमनेन प्रश्नायासेन। यदि रुचितसुरभिपरिमला गृह्यतामियम्।' इत्युक्त्वा समुपसृत्यात्मीयाच्छ्रवणादपनीय कलैरलिकुलक्वणितैः प्रारब्धसमागमप्रार्थनामिव मदीये श्रवणपुटे तामकरोत्। मम तु तत्करतलस्पर्शलाभेन तत्क्षणमपरमिव पारिजातकुसुममवतंसस्थाने पुलकमासीत्। स च मत्कपोलस्पर्शेन तरलीकृताङ्गुलिजालकात्करतलाद्‍क्षमालां लज्जया सह गलितामपि नाज्ञासीत्। अथाहं तामसम्प्राप्तामेव भूतलमक्षमालां गृहीत्वा सलीलं तद्भुजपाशसन्दानितकण्ठग्रहसुखमिवानुभवन्ती दर्शितापूर्वहारलतालीलां कण्ठाभरणतामनयम्।

इत्यम्भूते च व्यतिकरे छत्रग्राहिणी मामवोचत्—'भर्तृदारिके, स्नाता देवी। प्रत्यासीदति गृहगमनकालः। तत्क्रियतां मज्जनविधिः' इति। अहं तु तेन तस्या वचनेन नवग्रहा करिणीव प्रथमाङ्कुशपातेनानिच्छया कथं कथमपि समाकृष्यमाणा तन्मुखालावण्यामृतपङ्कमग्नामिव कपोलपुलककण्टकजालकलग्नामिव मदनशरशलाकाकीलितामिव सौभाग्यगुणस्यूतामिवातिकृच्छ्रेण दृष्टिमाकृष्य स्नातुमुदचलम्। उच्चलितायां च मयि द्वितीयो मुनिदारकस्तथाविधं तस्य धैर्यस्खलितमालोक्य किञ्चित्प्रकटितप्रणयकोप इवावादीत्—

'सखे पुण्डरीक, नैतदनुरूपं भवतः। क्षुद्रजनक्षुण्ण एष मार्गः। धैर्यधना हि साधवः। किं यः कश्चित्प्राकृत इव विक्लवीभवन्तमात्मानं न रुणत्सि। कुतस्तवापूर्वोऽयमद्येन्द्रियोपप्लवो येनास्येवं कृतः। क्व ते तद्धैर्यम्। क्वासाविन्द्रियजयः। क्व तद्वशित्वं चेतसः। क्व सा प्रशान्तिः। क्व तत्कुलक्रमागतं ब्रह्मचर्यम्। क्व सा सर्वविषयानुत्सु-

कता। क्व ते गुरूपदेशाः। क्व तानि श्रुतानि। क्व ता वैराग्यबुद्धयः। क्व तदुपभोगविद्वेषित्वम्। क्व सा सुखपराङ्मुखता। क्वासौ तपस्यभिनिवेशः। क्व सा सङ्गानामुपर्यरुचिः। क्व तद्यौवनानुशासनम्। सर्वथा निष्फला प्रज्ञा निर्गुणो धर्मशास्त्राभ्यासः, निरर्थकः संस्कारः, निरुपकारको गुरूपदेशविवेकः, निष्प्रयोजना प्रबुद्धता, निष्कारणं ज्ञानम्। यदत्र भवादृशा अपि रागाभिषङ्गैः कलुषीक्रियन्ते प्रमादैश्चाभिभूयन्ते। कथं करतलाद्गलितामपहृतामक्षमालामपि न लक्षयसि। अहो विगतचेतनत्वम्। अपहृता नामेयम्। इदमपि तावदपह्रियमाणमनयानार्यया निवार्यतां हृदयम्।'

इत्येवमभिधीयमानश्च तेन किञ्चिदुपजातलज्ज इव प्रत्यवादीत्—'सखे कपिञ्जल, किं मामन्यथा सम्भावयसि। नाहमेवमस्या दुर्विनीतकन्यकाया मर्षयाम्यक्षमालाग्रहणापराधमिमम्।' इत्यभिधायालीककोपकान्तेन प्रयत्नविरचितभीषणभ्रुकुटिभूषणेन मुखेन्दुना मामवदत्-'चपले, प्रदेशादस्मादिमामक्षमालामदत्वा पदात्पदमपि न गन्तव्यम्' इति। तच्च श्रुत्वाहमात्मकण्ठादुन्मुच्यैकावलीम् 'भगवन्, गृह्यतामक्षमाला' इति मन्मुखासक्तदृष्टेः शून्यहृदयस्यास्य प्रसारिते पाणौ निधाय स्वेदसलिलस्नातापि पुनः स्नातुमवातरम्। उत्थाय च कथमपि प्रयत्नेन निम्नगेव प्रतीपं नीयमाना सखीजनेन बलादम्बया सह तमेव चिन्तयन्ती स्वभवनमयासिषम्। गत्वा च प्रविश्य कन्यान्तःपुरं ततः प्रभृति तद्विरहविधुरा किमागतास्मि किं तत्रैव स्थितास्मि किमेकाकिन्यस्मि किं परिवृतास्मि किं तूष्णीमास्मि किं प्रस्तुतालापास्मि किं जागर्मि किं सुप्तास्मि किं रोदिमि किं न रोदिमि किं दुःखमिदं किं सुखमिदं किमुत्कण्ठेयं किं व्याधिरयं किं व्यसनमिदं किमुत्सवोऽयं किं दिवस एष किं निशेयं कानि रम्याणि

कान्यस्याणीति सर्वं नावागच्छम्। अविज्ञातमदनवृत्तान्ता च क्व गच्छामि किं शृणोमि किं पश्यामि किमालपामि कस्य कथयामि कोऽस्य प्रतीकार इति सर्वं च नाज्ञासिषम्। केवलमारुह्य कुमारीपुरप्रासादं विसर्ज्य च सखीजनं द्वारि निवारिताशेषपरिजनप्रवेशा, सर्वव्यापारानुत्सृज्यैकाकिनी मणिजालगवाक्षनिक्षिप्तमुखी, तामेव दिशं तत्सनाथतया प्रसाधितामिव कुसुमितामिव महारत्ननिधानाधिष्ठितामिवा-

तद्वल्लभतया तपःक्लेशायापि स्पृहयन्ती, तत्प्रीत्येव गृहीतमौनव्रता, स्मरजनितपक्षपाता च तत्परिग्रहान्मुनिवेषस्याग्राम्यतां तदास्पदतया यौवनस्य चारुतां तच्चरणसम्पर्कात्पारिजातकुसुमस्य मनोहरतां तन्निवासात्सुरलोकस्य रम्यतां तद्रूपसम्पदा कुसुमायुधस्य दुर्जयतामध्यारोपयन्ती, दूरस्थस्यापि कमलिनीव सवितुः सागरवेलेव चन्द्रमसो मयूरीव जलधरस्य तस्यैवाभिमुखी, तथैव तां तद्विरहातुरजीवितोद्गमरक्षावलीमिवाक्षावलीं कण्ठेनोद्वहन्ती, तथैव च तया प्रस्तुततद्वृत्तस्यालापयेव कर्णलग्नया पारिजातमञ्जर्या तथैव च तेन तत्करतलस्पर्शसुखजन्मना कदम्बमुकुलकर्णपूरायमाणेन रोमाञ्चजालेन कण्टकितैककपोलफलका निस्पन्दमातिष्ठम्।

अथ ताम्बूलकरङ्कवाहिनी मदीया तरलिका नाम मयैव सह गता स्नातुमासीत्। सा च पश्चाच्चिरादिवागत्य तथावस्थितां शनैर्मामवादीत्–'भर्तृदारिके, यौ तौ तापसकुमारकौ दिव्याकारावस्माभिरच्छोदसरस्तीरे दृष्टौ तयोरेको येन भर्तृदुहितुरियमवतंसीकृता सुरतरुकुसुममञ्जरी स तस्माद् द्वितीयादात्मनो रक्षन्दर्शनमतिनिभृतपदः कुसुमितलतासन्तान-

गहनान्तरेणोपसृत्य मामागच्छन्तीं पृष्ठतो भर्तृदारिकामुद्दिश्याप्राक्षीत्–'बालिके, केयं कन्यका कस्य वापत्यं किमभिधाना क्व गच्छति' इति। मयोक्तम्–'एषा खलु भगवतः श्वेतभानोरंशुसम्भूतायामप्सरसि गौर्यां समुत्पन्ना हंसस्य सकलगन्धर्वमुकुटमणिशलाकाशिखरोल्लेखमसृणितचरणनखचक्रस्य गन्धर्वाधिपतेर्हंसस्य दुहिता महाश्वेता नाम गन्धर्वाधिवासं हेमकूटाचलमभिप्रस्थिता।' इति कथिते च मया किमपि चिन्तयन्मुहूर्तमिव तूष्णीं स्थित्वा विगतनिमेषेण चक्षुषा चिरमभिवीक्षमाणो मां, सानुनयमभ्यर्थितामिव दर्शयन्पुनराह–'बालिके, कल्याणिनी तवाविसंवादिन्यचपला बालभावेऽप्याकृतिरियम्। तत्करोषि मे वचनमेकमभ्यर्थ्यमाना' इति। ततो मया सविनयमुपरचिताञ्जलिपुटया दर्शितादरमभिहितः–'भगवन्, कस्मादेवमभिधत्से। काहम्। महात्मानः सकलत्रिभुवनपूजनीयास्त्वादृशाः पुण्यैर्विना निखिलकलमषापहारिणीमस्मद्विधेषु दृष्टिमपि न पातयन्ति किं पुनराज्ञाम्। तद्विश्रब्धमादिश्यतां कर्तव्यम्। अनुगृह्यतामयं जनः।' इत्येवमुक्तश्च मया सस्नेहया सखीमिवोपकारिणीमिव प्राणप्रदामिव दृष्ट्या मामभिनन्द्य निकटवर्तिनस्तमालपादपात्पल्लवमादाय निष्पीड्य शिलातले तेन गन्धगजमदसुरभिपरिमलेन रसेनोत्तरीयवल्कलैकदेशाद्विपाट्य पट्टिकां स्वहस्तकमलकनिष्ठिकानखशिखरेणाभिलिख्य 'इयं पत्रिका त्वया तस्मै कन्यकायै प्रच्छन्नमेकाकिन्यै देया' इत्यभिधायार्पितवान्।' इत्युक्त्वा च सा ताम्बूलभाजनादाकृष्य तामदर्शयत्। अहं तु तेन तत्सम्बन्धिनालापेन शब्दमयेनापि स्पर्शसुखमिवान्तर्जनयता श्रोत्रविषयेणापि रोमोद्गमानुमितसर्वाङ्गानुप्रवेशेन मदनावेशमन्त्रेणेवावेश्यमाना तस्याः करतलादादाय तां वल्कलपट्टिकां तस्यामिमामभिलिखितामार्यामपश्यम्–

'दूरं मुक्तालतया बिससितया विप्रलोभ्यमानो मे ।
हंस इव दर्शिताशो मानसजन्मा त्वया नीतः ॥'

अनया च मे दृष्टया, दिङ्मोहभ्रान्त्येव प्रनष्टवर्त्मनो बहुलनिशयेवान्धस्य जिह्वोच्छित्त्येव मूकस्येन्द्रजालिकपिच्छिकयेवासत्यदर्शिनो ज्वरप्रज्ञापप्रवृत्त्येवासम्बद्धभाषिणो दुष्टनिद्रयेव विषविह्वलस्य लोकायतिक्रिययेवाधर्मरुचेर्मदिरयेवोन्मत्तस्य दुरावेशक्रिययेव पिशाचग्रहस्य, दोषविकारोपचयः सुतरामक्रियत स्मरातुरस्य मे मनसः । येनाकुलीक्रियमाणा सरिदिव पूरेण विह्वलतामगमम् । तां च द्वितीयदर्शनेन कृतमहापुण्यामिवानुभूतसुरलोकवासामिव देवताधिष्ठितामिव लब्धवरामिव पीतामृतामिव समासादितत्रैलोक्यराज्याभिषेकामिव मन्यमाना, सततसन्निहितामपि दुर्लभदर्शनामिवातिपरिचितामप्यपूर्वामिव सादरमाभाषमाणा, पार्श्वावस्थितामपि सर्वलोकस्योपर्यवस्थितामिव पश्यन्ती, कपोलयोरलकलताभङ्गेषु च सोपग्रहं स्पृशन्ती, विपरीतमिव परिजनस्वामिसम्बन्धमुपदर्शयन्ती, 'तरलिके, कथय कथं स त्वया दृष्टः, किं किमभिहितासि तेन, कियन्तं कालमवस्थितासि तत्र, कियदनुसरन्नस्मानसावागतः' इति पुनः पुनः पर्यपृच्छम् । अनयैव च कथया तया सह तस्मिन्नेव प्रासादे तथैव प्रतिषिद्धाशेषपरिजनप्रवेशा दिवसमत्यवाहयम् ।

अथ महार्घेणेव हृदयेन कृतरागसंविभागे लोहितायति गगनतलोपान्तावलम्बिनि रविबिम्बे, गैरिकगिरिसलिलप्रपातपाटलेषु कमलवनेभ्यः समुत्थाय वनगजयूथेष्विव पुञ्जीभवत्सु भास्करकिरणेषु, गगनावतारविश्रामलालसानां हर्षहेषारवप्रतिशब्दकेन सह निशति मेरुगिरिगह्वरं वासरे, मुकुलितरक्तपङ्कजपुटप्रविष्टमधुकरावलिषु रविविरहमूर्च्छान्धकारितहृदयास्विव प्रारब्धनिमीलनासु पद्मिनीषु, भासीकृतसामान्य-

मृणाललताविचरन्तिङ्कालिलानीन परस्परहृदयान्यादाय विघटमानेषु रथाङ्गनाम्नां युगलेषु, सा छत्रग्राहिणी समागत्याकथयत्—'भर्तृदारिके, तयोर्मुनिकुमारयोरन्यतरो द्वारि तिष्ठति, कथयति चाक्षमालामुपयाचितुमागतोऽस्मीति।'

अहं तु मुनिकुमारनामग्रहणादेव स्थानस्थितापि गतेव द्वारदेशं समुपजाततदागमनाशङ्का समाहूयान्यतमं कञ्चुकिनं 'गच्छ, प्रवेश्यताम्' इत्यादिश्य प्राहिणवम्। अथ मुहूर्तादिव तं तस्य, रूपस्येव यौवनं यौवनस्येव मकरकेतनं मकरकेतनस्येव वसन्तसमयं वसन्तसमयस्येव दक्षिणानिलम्, अनुरूपं सखायमृषिकुमारकं कपिञ्जलनामानं जराधवलितस्य कञ्चुकिनोऽनुमार्गेण चन्द्रातपस्येव बालातपमागच्छन्तमपश्यम्। अन्तिकमुपगतस्य चास्य पर्याकुलमिव सविषादमिव शून्यमिवार्थिनमिवान्तर्गताकूलमाकारमलक्षयम्। उत्थाय च कृतप्रणामा सादरं स्वयमासनमुपाहरम्। उपविष्टस्य च बलादनिच्छतोऽपि प्रक्षाल्य चरणावुपमृज्योत्तरीयांशुकपल्लवेनाव्यवधानायां भूमावेव तस्यान्तिके समुपाविशम्। अथ मुहूर्तमिव स्थित्वा किमपि विवक्षुरिव स तस्यां मत्समीपोपविष्टायां तरलिकायां चक्षुरपातयत्। अहं तु विदिताभिप्राया दृष्ट्वैव 'भगवन्, अव्यतिरिक्तेयमस्मच्छरीरादशङ्कितमभिधीयताम्' इत्यवोचम्।

एवमुक्तश्च मया कपिञ्जलः प्रत्यवादीत्—'राजपुत्रि, किं ब्रवीमि। यतो मे नाभिधेयविषयमवतरति त्रपया। क्व कन्दमूलफलाशी शान्तो वनवासनिरतो मुनिजनः। क्वायमनुपशान्तजनोचितो विषयोपभोगाभिलाषकलुषो मन्मथविविधविलाससङ्कटो रागप्रायः प्रपञ्चः। सर्वमेवानुपपन्नमालोकय किमारब्धं दैवेन। अयत्नेनैव खलूपहासास्पदत[illegible] रो नया[illegible]म। न [illegible]

मुताहो जटानां समुचितम् । किं तपसोऽनुरूपमाहोस्विद्धर्मोपदेशाङ्गमिदम् । अपूर्वेयं विडम्बना । केवलमवश्यकथनीयमिदम् । अपर उपायो न दृश्यते । अन्या प्रतिक्रिया नोपलभ्यते । अन्यच्छरणं नालोक्यते । अन्या गतिर्नास्ति । अकथ्यमाने च महाननर्थोपनिपातो जायते । प्राणपरित्यागेनापि रक्षणीयाः सुहृदस्तव इति कथयामि । अस्ति मयत्या समक्षमेव स मया तया निष्ठुरमुपदर्शितकोपेनाभिहित । तथा चाभिधाय परित्यज्य तस्मात्प्रदेशादुपजातमन्युरुत्सृष्टकुसुमावचयोऽन्यं प्रदेशमगमम् । अपयातायां भवत्या मुहूर्तमिव स्थित्वैकाकी किमयमिदानीमाचरतीति सञ्जातवितर्कः प्रतिनिवृत्य विटपान्तरितविग्रहस्तं प्रदेशं व्यलोकयम् । यावत्तत्र तं नाद्राक्षमासीच्च मे मनस्येवम्— किं नु मदनपरायत्तचित्तवृत्तिस्तामेवानुसरन्गतो भवेत्, गतायां च तस्यां लब्धचेतनो लज्जमानो न शक्नोति मे दर्शनपथमुपगन्तुम्, आहोस्वित्कुपित परित्यज्य मां गत ,उतान्विष्यन्मामेव प्रदेशमन्यमित समाश्रित स्यात् ।' इत्येवं विकल्पयन्कश्चित्कालमतिष्ठम् । तेन तु जन्मन प्रभृत्यनभ्यस्तेन तस्य क्षणमप्यदर्शनेन दूयमान पुनरचिन्तयम्—'स कदाचिद्धैर्यस्खलनलज्जितः किञ्चिदनिष्टमपि समाचरेत् । न हि किञ्चिन्न क्रियते ह्रिया । तन्न युक्तमेनमेकाकिनं कर्तुम् ।' इत्यन्वेष्टुमादरमकरवम् । अन्विष्यंश्च यथायथा नापश्यं तं तथातथा सुहृत्स्नेहकातरेण मनसा तत्तदशोभनमाशङ्कमानस्तरुलतागहनानि चन्दनवीथिका लतामण्डपान्सर कूलानि च वीक्षमाणो निपुणमितस्ततो दत्तदृष्टिः सुचिरं व्यचरम् ।

अथैकस्मिन्सर समीपवर्तिनि निरन्तरतया कुसुममय इव मधुकरमय इव परभृतमय इव मयूरमय इवातिमनोहरे वसन्तजन्मभूमिभूते लतागहने कृतावस्थानम्, उत्सृष्टसकलव्यापारतया लिखितमिवोत्कीर्णमिव स्तम्भितमिवोपरतमिव

प्रसुप्तमिव योगसमाधिस्थमिव, अतिनिःस्पन्दतया हृदयनिवासिनीं प्रियां द्रष्टुमन्तःप्रविष्टैरिवासह्यसन्तापसन्त्रासप्रलीनैरिव मनःक्षोभप्रकुपितैरिवोन्मुच्य गतैरिन्द्रियैः शून्यीकृतशरीरम्, वामकपोलशयनीकृतकरतलतया समुत्सर्पद्भिरमलैर्नखांशुभिर्विमलीकृतमच्छाच्छचन्दनरसरचितललाटिकमिव ललाटमुद्वहन्तम्, अचिरापनीतपारिजातकुसुमकर्णपूरतया सशेषपरिमलामोदलोभोपसर्पिणा चलविरतच्छलेन मदनसंमोहनमन्त्रमिव जपता मधुकरकुलेन सनीलोत्पलमिव सतमालपल्लवमिव श्रवणदेशं दधानम्, दक्षिणकरेण च स्फुरितनखकिरणनिकरां करतलस्पर्शसुखकण्टकितामिव मुक्तावलीमविनयपताकामुरसि धारयन्तम्, मदनवशीकरणचूर्णेनेव कुसुमरेणुना तरुभिराहन्यमानम्, आत्मरागमिव सङ्क्रामयद्भिरासन्नैरनिलचलितैरशोकपल्लवैः स्पृश्यमानम्, अलिनिवहनिपीयमानपरिमलैरुपरि पतद्भिश्चम्पककुड्मलैस्ततःशराग्न्युल्कैरिव सधूमैः कुसुमशरेण ताड्यमानम्, अतिबहलवनामोदमत्तमधुकरझङ्कारनिस्वनैर्हुङ्कारैरिव दक्षिणानिलेन निर्भर्त्स्यमानम्, मदकलकोकिलकुलकोलाहलैर्वसन्तजयशब्दकलकलैरिव मधुमासेनाकुलीक्रियमाणम्, प्रभातचन्द्रमिव पाण्डुतया परिगृहीतं, निदाघगङ्गाप्रवाहमिव कृशिमानमागतम्, अन्तर्गतानलं चन्दनविटपमिव म्लायन्तम्, अन्यमिवादृष्टपूर्वमिवापरिचितमिव जन्मान्तरमिवोपगतं रूपान्तरेणेव परिणतम्, आविष्टमिव महाभूताधिष्ठितमिव ग्रहगृहीतमिवोन्मत्तमिव छलितमिवान्धमिव बधिरमिव मूकमिव, विलासमयमिव मदनमयमिव परायत्तचित्तवृत्तिं परां कोटिमधिरूढं मन्मथावेशस्य, अनभिलक्ष्यपूर्वाकारं तमहमद्राक्षम्।

अपगतनिमेषेण चक्षुषा तदवस्थं चिरमुद्वीक्ष्य समुपजातविषादो वेपमानेन हृदयेनाचिन्तयम्— 'एवं नामायमति-

दुर्विषहवेगो मकरकेतुः, येनानेन क्षणेनायमीदृशमवस्थान्तरमप्रतीकारमुपनीतः । कथमेवमेकपदे व्यर्थीभवेदेवंविधो ज्ञानराशिः । अहो बत महदाश्चर्यम् । तथा नामायमा शैशवादतिप्रकृतिरस्खलितवृत्तिर्मम चान्येषां च मुनिकुमारकाणां स्पृहणीयचरित आसीत् । अद्य पितर इव परिभूय ज्ञानमविगणय्य तपःप्रभावमुन्मूल्य गाम्भीर्यं मन्मथेन जडीकृतः । सर्वथा दुर्लभं यौवनमस्खलितम्' इति । उपसृत्य च तस्मिन्नेव शिलातलैकपार्श्वे समुपविश्यांसदेशावसक्तपाणिः स्तिमितमनुन्मीलितलोचनमेव 'सखे पुण्डरीक, कथय किमिदम्' इत्यपृच्छम् । अथ सुचिरसंमीलनाल्लग्नमिव कथमपि प्रयत्नेनानवरतरोदनवशादुपजातारुणभावमश्रुजलपटलपूरप्लावितमुपरुद्धमिव सवेदनमिव स्वच्छांशुकान्तरितरक्तकमलवनच्छायं चक्षुरुन्मील्य मन्थरया दृष्ट्या सुचिरं विलोक्य मामायततरं निःश्वस्य लज्जाविशीर्यमाणविरलाक्षरं ' सखे कपिञ्जल, विदितवृत्तान्तोऽपि किं मां पृच्छसि ' इति कृच्छ्रेण शनैः शनैरवदत् । अहं तु तदाकर्ण्य तदवस्थस्यैवाप्रतीकारविकारोऽयं तथापि सुहृदा सुहृदसन्मार्गप्रवृत्तो यावच्छक्तितः सर्वात्मना निवारणीय इति मनसावधार्याब्रवम्-'सखे पुण्डरीक, सुविदितमेतन्मम । केवलमिदमेव पृच्छामि । यदेतदारब्धं भवता किमिदं गुरुभिरुपदिष्टम्, उत धर्मशास्त्रेषु पठितम्, उत धर्मार्जनोपायोऽयम्, उतापरस्तपसां प्रकारः, उत स्वर्गगमनमार्गोऽयम्, उत व्रतरहस्यमिदम्, उत मोक्षप्राप्तियुक्तिरियम्, आहोस्विदन्यो नियमप्रकारः । कथमेतद्युक्तं भवतो मनसापि चिन्तयितुं किं पुनराख्यातुमीक्षितुं वा । किमप्रबुद्ध इवानेन मन्मथहतकेनोपहासास्पदतां नीयमानमात्मानं नावबुध्यसे । मूढो हि मदनेनायास्यते । का वा सुखाशा साधुजननिन्दितेष्वेवंविधेषु प्राकृतजनबहुमतेषु विषयेषु भवतः । स खलु धर्मबुद्ध्या

विषलतावनं सिञ्चति कुवलयमालेति निस्त्रिंशलतामालिङ्गति कृष्णागुरुधूमलेखेति कृष्णसर्पमवगूहते रत्नमिति ज्वलन्तमङ्गारमभिस्पृशति मृणालमिति दुष्टवारणदन्तमुसलमुन्मूलयति मूढो विषयोपभोगेष्वनिष्टानुबन्धिषु यः सुखबुद्धिमारोपयति। अधिगतविषयतत्त्वोऽपि कस्मात्खद्योत इव ज्योतिर्निर्वीर्यमिदं ज्ञानमुद्वहसि, यतो न निवारयसि प्रबलरजःप्रसरकलुषितानि स्रोतांसीवोन्मार्गप्रस्थितानीन्द्रियाणि, न नियमयसि वा क्षुभितं मनः। कोऽयमनङ्गो नाम। धैर्यमवलम्ब्य निर्भर्त्स्यतामयं दुराचारः।' इत्येवं वदत एव मे वचनमाक्षिप्य प्रतिपक्ष्मान्तरालप्रवृत्तबाष्पवेणिकं प्रमृज्य चक्षुः करतलेन पाणौ मामवलम्ब्यावोचत्—'सखे, किं बहुनोक्तेन। सर्वथा स्वस्थोऽसि। आशीविषविषवेगविषमाणामेतेषां कुसुमचापसायकानां पतितोऽसि न गोचरे। सुखमुपदिश्यते परस्य। यस्य चेन्द्रियाणि सन्ति मनो वा विद्यते, यः पश्यति वा शृणोति वा श्रुतमवधारयति वा, यो वा शुभमिदं न शुभमिदमिति विवेक्तुमलम्, स खलूपदेशमर्हति। मम तु सर्वमेवेदमतिदूरापेतम्। अवष्टम्भो ज्ञानं धैर्यं प्रतिसंख्यानमित्यस्तमितैषा कथा। कथमप्येवमेवायत्नविधृतास्तिष्ठन्त्यसवः। दूरातीतः खलूपदेशकालः। समतिक्रान्तो धैर्यावसरः। गता प्रतिसंख्यानवेला। अतीतो ज्ञानावष्टम्भसमयः। केन चान्येनास्मिन्समये भवन्तमपहायोपदेष्टव्यमुन्मार्गप्रवृत्तिनिवारणं वा करणीयम्। कस्यान्यस्य वा वचसि मया स्थातव्यम्। को वापरस्त्वत्समो मे जगति बन्धुः। किं करोमि, यन्न शक्नोमि निवारयितुमात्मानम्। इयमनेनैव क्षणेन भवता दृष्टावस्था। तद्गत इदानीमुपदेशकालः। यावत्प्राणिमि तावदस्य कल्पान्तोदितद्वादशदिनकरकिरणातपतीव्रस्य मदनसन्तापस्य प्रतिक्रियां क्रियमाणामिच्छामि। पच्यन्त इव मेऽङ्गानि। उत्क्वथ्यत इव हृदयम्।

म्लुष्यत इव दृष्टि । ज्वलतीव शरीरम् । अत्र यत्प्राप्तकालं तत्करोतु भवान् ।' इत्यभिधाय तूष्णीमभवत् ।

एवमुक्तोऽप्यहमेतं प्रायोधयं पुनः पुनः । यदा शास्त्रोपदेशविशदैः सनिदर्शनैः सेतिहासैश्च वचोभिः सानुनयं सोपमर्दं चाभिधीयमानोऽपि नाकरोत्कर्णे तदाहमचिन्तयम्—' अतिभूमिमयं गतो न शक्यते निवर्तयितुम् । इदानीं निरर्थकाः खलूपदेशाः । तत्प्राणपरिरक्षणेऽपि तावदस्य यत्नमाचरामि।' इति कृतमतिरुत्थाय गत्वा तस्मात्सरसः सरसा मृणालिकाः समुद्धृत्य कमलिनीपलाशानि जललवलाञ्छितान्यादाय गर्भधूलिकषायपरिमलमनोहराणि च कुमुदकुवलयकमलानि गृहीत्वागत्य तस्मिन्नेव लतागृहशिलातले शयनमस्याकल्पयम् । तत्र च सुखनिषण्णस्य प्रत्यासन्नवर्तिनो चन्दनविटपिनो मृदूनि किसलयानि निष्पीड्य तेन स्वभावसुरभिणा तुषारशिशिरेण रसेन ललाटिकामकल्पयम् । आ चरणतलादङ्गचर्चां चारचयम् । अभ्यर्णपादपस्फुटितवल्कलविवरशीर्णेन च करतलचूर्णितेन कर्पूररेणुना स्वेदप्रतिक्रियामकरवम् । उरोनिहितचन्दनद्रवार्द्रवल्कलस्य स्वच्छसलिलसीकरनिकरस्राविणा कदलीदलेन व्यजनक्रियामन्वतिष्ठम् । एवं च मुहुर्मुहुरन्यदन्यन्नलिनीदलशयनमुपकल्पयतो मुहुर्मुहुश्चन्दनचर्चामारचयतो मुहुर्मुहुश्च स्वेदप्रतिक्रियां कुर्वतः कदलीदलेनानवरतं वीजयतः समुदभून्मे मनसि चिन्ता—' नास्ति खल्वसाध्यं नाम भगवतो मनोभुवः । क्वायं हरिण इव वनवासनिरतः स्वभावमुग्धो जनः, क्व च विविधविलाससराशिर्गन्धर्वराजपुत्री महाश्वेता । सर्वथा न हि किञ्चिदस्य दुर्घटं दुष्करमनायत्तमकर्तव्यं वा जगति । दुरुपपादेष्वर्थेष्वयमवज्ञया विचरति । नायं केनापि प्रतिकूलयितुं शक्यते । का वा गणना सचेतनेषु, अपगतचेतनान्यपि संघटयि-

तुमल यदस्मै रोचते। तत्कुमुदिन्यपि दिनकरकरानुरागिणी भवति, कमलिन्यपि शशिकरस्पर्शमुज्झति निशापि वासरेण सह मिश्रतामेति, ज्योत्स्नाप्यन्धकारमनुवर्तते, छायापि प्रदीपाभिमुखमवतिष्ठते, तडिदपि जलदे स्थिरतां व्रजति जरापि यौवनेन सञ्चारिणी भवति। किं वा तस्य दु साध्यमपरम्, एवंविधो येनायमगाधगाम्भीर्यसागरस्तृणलघुतामुपनीत। क तत्तप, केयमवस्था। सर्वथा निष्प्रतीकारे यमापदुपस्थिता। किमिदानीं कर्तव्यम्। किं वा चेष्टितव्यम्। का दिश गन्तव्यम्। किं शरणम्। को वोपाय, क सहाय, क प्रकार, का युक्ति, क समाश्रय, येनास्यासव सन्धार्यन्ते। केन वा कौशलेन कतमया वा युक्त्या कतरेण वा प्रकारेण केन वावष्टम्भेन कया वा प्रज्ञया कतमेन वा समाश्वासनेनाय जीवेत्।' इत्येते चान्ये च मे विपरणहृदयस्य सङ्कल्पा प्रादुरासन्। पुनश्चाचिन्तयम्—'किमनया ध्यातया निष्प्रयोजनया चिन्तया। प्राणास्तावदस्य येन केनचिदुपायेन शुभेनाशुभेन वा रक्षणीया। तेषां च तत्समागममेकमपहाय नास्त्यपर सरक्षणोपाय। बालभावादप्रगल्भतया च तथा विरुद्धमनुचितमुपहासमिवात्मनो मदनव्यतिकरं मन्यमानो नियतमेकोच्छ्वासावशेषजीवितोऽपि नाय तस्या स्वयमभिगमनेन पूरयति मनोरथम्। अकालान्तरक्षमश्चायमस्य मदनविकार। सततमतिगर्हितेनाकृत्येनापि रक्षणीयान्मन्यन्ते सुहृदसून्साधव। तदतिकृपणमकर्तव्यमप्येतदस्माकमवश्यकर्तव्यतामापतितम्। किं चान्यत्क्रियते। का वान्या गति। सर्वथा प्रयामि तस्या सकाशम्। आवेदयाम्येतामवस्थाम्।' इति चिन्तयित्वा कदाचिदनुचितव्यापारप्रवृत्त मा विज्ञाय सञ्जातलज्जो निवारयेदित्यनिवेद्यैव तस्मै तत्प्रदेशात्सव्याजमुत्थायागतोऽहम्। तदेवमवस्थिते यदत्रावसरप्राप्तमीदृशस्य

चानुरागस्य सदृशमस्मदागमनस्य चानुरूपमात्मनो वा समुचितं तत्र भवति भवती ।' इत्यभिधाय किमियं वक्ष्यतीति मन्मुखासक्तदृष्टिस्तूष्णीमासीत् ।

अहन्तु तदाकर्ण्य सुखामृतमये ह्रद इव निमग्ना, सर्वानन्दानामुपरि वर्तमाना, सर्वमनोरथानामग्रमिवाधिरूढा, सर्वोत्सवानामतिभूमिमिवाधिशयाना, तत्कालोपजातया लज्जया किञ्चिदवनम्यमानवदनत्वाद् दृष्टकपोलोदरैरग्रथितैरिवोपर्युपरिपतनानुबन्धदर्शितमालाक्रमैरप्राप्तपक्ष्मसंश्लेषतयोपजातप्रथिमभिरमलैरानन्दबाष्पजलबिन्दुभिः स्रवद्भिरावेद्यमानप्रहर्षप्रसरा तत्क्षणमचिन्तयम्— दिष्ट्या तावदयमनङ्गो मामिव तमप्यनुबध्नाति । यच्चैवमनेन मे सन्तापयताऽपि क्रियताऽप्यंशेन दर्शितानुकूलता । यदि च सत्यमेव तस्येदृशी दशा वर्तते तत् किमिव नोपकृतमनेन, किं वा नोपपादितम्, को वाऽनेनापरः समानो बन्धुः । कथं वा कपिञ्जलस्य स्वप्नेऽपि वितथा भारती प्रशान्ताकृतेरस्माद्वदनान्निष्क्रामति । इत्थंभूते किं मयाऽपि प्रतिपत्तव्यम् । तस्य वा पुरः किमभिधातव्यम् ।' इत्येव विचारयन्त्या एव प्रविश्य ससम्भ्रमा प्रतीहारी मामकथयत्— भर्तृदारिके, स्वमस्वस्थशरीरेति परिजनादुपलभ्य महादेवी प्राप्ता' इति । तच्च श्रुत्वा कपिञ्जलो महाजनसम्मर्दभीरुः सत्वरमुत्थाय 'राजपुत्रि, महानयमुपस्थितः कालातिपातो भगवांश्च भुवनत्रयचूडामणिरस्तमुपगच्छति दिवसकरस्तद् गच्छामि, सर्वथाऽभिमतसुहृत्प्राणरक्षादक्षिणार्थमयमुपरचितोऽञ्जलिरयं मे परमो विभवः' इत्यभिधाय प्रतिवचनकालमप्रतीक्ष्यैव पुरोयायिनाम्यायाः प्रविशता धृतकनकवेत्रलताकरेण प्रतीहारीजनेन कञ्चुकिलोकेन गृहीतताम्बूलकुसुमपटवासाङ्गरागेण चामरव्यग्रपाणिना कुब्जकिरातबधिरवामनवर्षवरमूकानुगतेन परिजनेन सर्वतः संरुद्धे

द्वारदेशे कथमप्यवाप्तनिर्गमः प्रययौ । अम्बा तु मत्समीपमागत्य सुचिरं स्थित्वा स्वभवनमयासीत् । तया तु तत्रागत्य किं कृतं किमभिहितं किमाचेष्टितमिति शून्यहृदया सर्वं नालक्षयम् । गतायां च तस्यामस्तमुपगते भगवति हारीतहरितवाजिनि सरोजिनीजीवितेश्वरे चक्रवाकसुहृदि सवितरि, लोहितायमाने पश्चिमाशामुखे, हरितायमानेषु कमलवनेषु, नीलायमाने पूर्वदिग्भागे, पातालपङ्ककलुषेण महाप्रलयजलधिपयःपूरेणेव तिमिरेणावष्टभ्यमाने जीवलोके, किङ्कर्तव्यतामूढा तामेव तरलिकामपृच्छम्—'अयि तरलिके, कथं न पश्यसि दृढमाकुलं मे हृदयमप्रतिपत्तिविह्वलानि चेन्द्रियाणि । न स्वयमण्वपि कर्तव्यमलमस्मि ज्ञातुम् । उपदिशतु मे भवती यदत्र साम्प्रतम् । अयमेवं त्वत्समक्षमेवाभिधाय गतः कपिञ्जलः । यदि तावदितरकन्यकेव विहाय लज्जामुत्सृज्य धैर्यमपमुच्य विनयमचिन्तयित्वा जनापवादमतिक्रम्य सदाचारमुल्लङ्घ्य शीलमवगणय्य कुलमङ्गीकृत्यायशो रागान्धवृत्तिरननुज्ञाता पित्रानुमोदिता मात्रा स्वयमुपगम्य ग्राहयामि पाणिमेवं गुरुजनातिक्रमादधर्मो महान् । अथ धर्मानुरोधादितरपक्षावलम्बनद्वारेण मृत्युमङ्गीकरोम्येवमपि प्रथमं तावत्स्वयमागतस्य प्रथमप्रणयिनस्तत्रभवतः कपिञ्जलस्य प्रणयप्रसरभङ्गः, पुनरपरं यदि कदाचिदस्य जनस्य मत्कृताशाभङ्गात्प्राणविपत्तिरुपजायते तदपि मुनिजनवधजनितं महदेनो भवेत् ।' इत्येवमुच्चारयन्त्यामेव मय्यासन्नचन्द्रोदयजन्मना विरलविरलेनालोकेन वसन्तवनराजिरिव कुसुमरजसा धूसरतां वासवी दिगयासीत् । शनैःशनैश्चन्द्रदर्शनान्मन्दस्मितायाः दशनप्रभेव ज्योत्स्ना निष्पतन्ती निशाया मुखशोभामकरोत् । तदनु रसातलादवनीमुद्दारयोद्गच्छता शेषफणमण्डलेनेव रजनीकरबिम्बेनाराजत

रजनी। क्रमेण च सकलजीवलोकानन्दकरेण कामिनीजनवल्लभेन किञ्चिदुन्मुक्तबालभावेन मकरध्वजबन्धुभूतेन समुपारूढरागेणामृतमयेन यौवनेनेवारोहता शशिना रमणीयतामनीयत यामिनी।

अथ तं प्रत्यासन्नसमुद्रविद्रुमप्रभापाटलितमिवाभिनवोदयरागलोहितं रजनिकरमुदितं विलोक्यान्तर्ज्वलितमदनानलाप्यन्धकारितहृदया तरलिकोत्सङ्गविधृतशरीरापि मन्मथहस्तवर्तिनी चन्द्रगतनयनापि मृत्युमालोकयन्ती तत्क्षणमचिन्तयम्—'एकत्र खलु मदनमधुमासमलयमारुतप्रभृतयः समस्ताः, एकत्र चायं पापकारी चन्द्रहतको न शक्यते सोढुम्। इदमतिदुर्विषहमदनवेदनातुरं च मे हृदयम्। अस्य चोद्गमनमिदं सदाहज्वरग्रस्तस्याङ्गारवर्षः शीतार्तस्य तुषारपातो विषस्फोटमूर्च्छितस्य कृष्णसर्पदंशः।' इत्येवं विचिन्तयन्तीमेव चन्द्रोदयोपनीता कमलवनम्लानिनिद्रेव मूर्च्छा मां निमीलितलोचनामकार्षीत्। अचिरेण च सम्भ्रान्ततरलिकोपनीताभिश्चन्दनचर्चाभिस्तालवृन्तानिलैश्चोपलब्धसंज्ञा तामेवाकुलाकुलां मूर्तेनेवाधिष्ठितां विषादेन मस्तकाद्विधूतस्रवच्चन्द्रकान्तमणिशलाकामिवाविच्छिन्नबाष्पजलधारान्धकारितमुखीं रुदतीं तरलिकामपश्यम्। उन्मीलितलोचनां च मां सा कृतपादप्रणामा चन्दनपङ्कार्द्रेण करयुगलेन बद्धाञ्जलिरवादीत्—'भर्तृदारिके, किं लज्जया गुरुजनापेक्षया वा। प्रसीद, प्रेषय माम्। आनयामि ते हृदयदयितं जनम्। उत्तिष्ठ स्वयं वा तत्र गम्यताम्। अतः परमसमर्थास्मि सोढुमिमं प्रबलचन्द्रोदयविजृम्भमाणोत्कलिकाशतमुदधिमिव मकरचिह्नम्।' इत्येवंवादिनीं तामवोचम्—'उन्मत्ते, किं मन्मथेन। नन्वयं सर्वविकल्पानपहरन्सर्वोपायदर्शनान्युत्सारयन्सर्वानन्तरायानन्तरयन्सर्वसन्देहानपनयन्सर्वशङ्कास्तिर-

स्कुर्वल्लज्जामुन्मूलयन्स्वयमभिगमनलाघवदोषमाबृण्वन्नकालातिपातं परिहरन्नागत एव मृत्योस्तस्यैव वा सकाशं नेता कुमुदबान्धवः । तदुत्तिष्ठ यथाकथञ्चिदनुगमनेन जीवितं सम्भावयामि हृदयदयितमायासकारिणं जनम् ।' इत्यभिदधाना मदनमूर्च्छाखेदविह्वलैरङ्गैः कथञ्चिदवलम्ब्य तामेवोदतिष्ठम् । उच्चलितायाश्च मे दुर्निमित्तनिवेदकमस्पन्दत दक्षिणं लोचनम् । उपजातशङ्का चाचिन्तयमिदमपरं किमप्युपक्षिप्तं दैवेनेति ।

अथ नातिदूरोद्गतेन त्रिभुवनप्रासादमहाप्रणालानुकारिणा सुधासलिलप्लवानिव वहता चन्दनरसनिर्झरनिकरानिव क्षरता श्वेतगङ्गाप्रवाहसहस्राणीव वमताऽमृतसागरपूरानिवोद्गिरता चन्द्रमण्डलेन प्लाव्यमाने ज्योत्स्नया भुवनान्तराले, श्वेतद्वीपनिवासमिव सोमलोकदर्शनसुखमिवानुभवति जने, प्रतिभवनमङ्गनाजनेन विकचकुसुमगन्धैश्चन्दनोदकैरुपक्षिप्यमाणेषु चन्द्रोदयार्घेषु, प्रतिकुमुदमाबद्धमधुकरमण्डलासु प्रबुध्यमानासु भवनदीर्घिकाकुमुदिनीषु, शशिमणिप्रणालनिर्झरे प्रमोदमुखरमयूररवरम्ये प्रदोषसमये गृहीतविविधकुसुमताम्बूलाङ्गरागपटवासचूर्णया तरलिकयाऽनुगम्यमाना तेनैव मूर्च्छानिहितेन किञ्चिदाश्यानचन्दनललाटिकालग्नधूसराकुललकेन चन्दनरसचर्चाङ्गरागवेषेणाङ्गेन तथैव च तया कण्ठस्थितयाऽक्षमालया श्रवणशिखरचुम्बिन्या च पारिजातमञ्जर्या पद्मरागरत्नरश्मिनिर्मितेनेव रक्तांशुकेन कृतशिरोवगुण्ठना केनचिदात्मीयेनापि परिजनेनानुपलक्ष्यमाणा तस्मात्प्रासादशिखरादवातरम् ।

अवतीर्य च पारिजातकुसुममञ्जरीपरिमलाकृष्टेन रिक्तीकृतोपवनेन कुमुदवनान्यपहाय धावता मधुकरजालेन नीलपटावगुण्ठनविभ्रममिव सम्पादयताऽनुबध्यमाना प्रमदवनप-

पक्षद्वारेण निर्गत्य तत्समीपमुदचलम् । प्रयान्ती च तरलिकाद्वितीयमपरिजनमात्मानमवलोक्याचिन्तयम्—'प्रियतमाभिसरणप्रवृत्तस्य जनस्य किमिव दृश्यं बाह्येन परिजनेन । नन्वेत एव परिजनलीलामुपदर्शयन्ति । तथा हि । समारोपितशरासनासक्तसायकोऽनुसरति कुसुमायुधः । दूरप्रसारितकरः कर्षति शशी । प्रस्खलनभयात्पदे पदेऽवलम्बते रागः । लज्जां पृष्ठतः कृत्वा पुरः सहेन्द्रियैर्धावति हृदयम् । निश्चयमारोप्य नयत्युत्कण्ठा' इति । प्रकाशं चावदम्—'अयि तरलिके, अपि नाम मामिवायमिन्दुहतकस्तमपि कचग्रहाकृष्टमभिमुखमानयेत् ।' इत्येववादिनीं च मां सा विहस्याब्रवीत्—मर्तृदारिके मुग्धासि । किमस्य तेन जनेन । अयमात्मनैव तावन्मदनातुर इव भर्तृदारिकाया तास्ताश्चेष्टाः करोति । तथा हि । निर्मलजलप्रभूति पादयोः पतति । मृणालवलयधवलान्करान्धत्ते । केतकीगर्भकेसरधूलिधूसरपादः कुमुदसरास्यवगाहते । सलिलसीकरार्द्रांशुभिर्मणान्क-रेखामृशति । द्वेष्टि विघटितचक्रवाकमिथुनानि कमलवनानि ।' एतैश्चान्यैश्च तत्कालोचितैरालापैस्तया सह तमुद्देशमभ्युपागमम् । तत्र च मार्गलताकुसुमरजोधूसरं चरणयुगलं कैलासतटाच्चन्द्रोदयप्रस्रुतचन्द्रकान्तमणिप्रस्रवणे प्रक्षालयन्ती यस्मिन्प्रदेशे स आस्ते तस्मिन्नेव सरसः पश्चिमे तटे पुरुषस्येव रुदितध्वनिं निप्रकर्षोद्भातिव्यक्तमुपालक्षयम् । दक्षिणेक्षणस्फुरणेन च प्रथममेव मनस्याहितशङ्का तेन सुतरामवदीर्णहृदयेव किमप्यनिष्टमन्तः कथयतेव विषण्णेनान्तरात्मना 'तरलिके, किमिदम्' इति सभयमभिदधाना वेपमानगात्रयष्टिस्तदभिमुखमतित्वरितमगच्छम् ।

अथ निशीथप्रभावाद्दूरादेव विभाव्यमानस्वरमुन्मुक्तार्तनादं 'हा हतोऽस्मि, हा दग्धोऽस्मि, हा वञ्चितोऽस्मि, हा किमिदं

मापतितं किं युक्तम्, उत्सन्नोऽस्मि, दुरात्मन्मदन पिशाच पाप निर्घृण किमिदमकुसममनुष्ठितम्, आः पापे दुष्कृतकारिणि दुर्विनीते महाश्वेते किमनेन तेऽपकृतम्, आः पाप दुश्चरित चन्द्रचाण्डाल कृतार्थोऽसीदानीम्, अपगतदाक्षिण्य दक्षिणानिलहतक पूर्णास्ते मनोरथाः कृतं कर्तव्यं वहेदानीं यथेष्टम्, हा भगवञ्छ्वेतकेतो पुत्रवत्सल न वेत्सि मुषितमात्मानम्, हा धर्म निष्परिग्रहोऽसि, हा तपो निराश्रयमसि, हा सरस्वति विधवासि, हा सत्य अनाथमसि, हा सुरलोक शून्योऽसि, सखे प्रतिपालय मामहमपि भवन्तमनुयास्यामि न शक्नोमि भवता विना क्षणमप्यवस्थातुमेकाकी, कथमपरिचित इवादृष्टपूर्व इवाद्य मामेकपदे उत्सृज्य प्रयासि, कुतस्तवेयमतिनिष्ठुरता, कथय त्वदृते क्व गच्छामि कं याचे कं शरणमुपैमि, अन्धोऽस्मि संवृत्तः, शून्या मे दिशो जाता निरर्थकं जीवितम् अप्रयोजनं तपो निःसुखाश्च लोकाः, केन सह परिभ्रमामि, कमालपामि, उत्तिष्ठ देहि मे प्रतिवचनम्, क्व तन्ममोपरि सुहृत्प्रेम क्व सा स्मितपूर्वाभिभाषिता च' इत्येतानि चान्यानि च विलपन्तं कपिञ्जलमश्रौषम् ।

तच्च श्रुत्वा पतितैरिव प्राणैर्दूरादेव मुक्तैकताराक्रन्दा सरस्तीरलतासक्तित्रुटच्चमानांशुकोत्तरीया यथाशक्ति त्वरितैःस्खलत्समविषमभूमिभागविन्यस्तैः पादप्रक्षेपैः प्रस्खलन्ती पदे पदे फेनाप्लुतन्निय नीयमानेव तं प्रदेशं गत्वा सरस्तीरसमीपवर्तिनि शिशिरसीकरासारस्राविणि शशिमणिशिलातले विरचितं कुमुदकुवलयकमलविविधवनकुसुमसुकुमारं कुसुमशरसायकमयमिव शयनमधिशयानम्, अतिनिष्पन्दतया मत्पदशब्दमिवाकर्णयन्तम्, अन्तःकोपशमितमदनसन्तापतया तत्क्षणलब्धसुखप्रसुप्तमिव, मनःक्षोभप्रायश्चित्तप्राणायामावस्थितमिव, अतिप्रस्फुरितप्रेम्णा 'त्वत्कृते ममेय-

मवस्था' इति कथयन्तमिवाधरेण, इन्दुक्षेपपरिवर्तितदेहतया पृष्ठभागनिपतितैर्मदनदहनविह्वलहृदयन्यस्तनखमयूखच्छलेन च्छिद्रितमिव शशिकिरणैः, 'मत्तः प्रियतरस्तवापरो जनो जात' इति कुपितेनेव जीवितेन परित्यक्तम्, मन्मथव्यथया सहैतानसून्त्वयमिवोत्सृज्य निश्चेतनतासुखमनुभवन्तम्, अविरत रोदनाताम्रेण 'कठिनहृदये, दर्शनमात्रकेणापि न पुनरनुगृहीतोऽयमनुगतो जन' इति सप्रणयं मामुपालभमानमिव चक्षुषा, किञ्चिद्विवृताधरतया जीवितमपहर्तुमन्तः प्रविष्टैरिवेन्दुकिरणैर्निर्गच्छद्भिर्दशनांशुभिर्धवलितपुरोभागम्, मन्मथव्यथाविष्टमानहृदयनिहितेन वामेन पाणिना 'प्रसीद प्राणैः समं प्राणसमे न गन्तव्यम्' इति हृदयस्थितां मामिव धारयन्तम्, इतरेण च नखमयूखदन्तुरतया चन्दनमिव स्रवतोराताीकृतेन चन्द्रातपमिव निवारयन्तम्, अन्तिकस्थितेन चाचिरोद्गतजीवितमार्गमिवोद्ग्रीवेण विलोकयता तप सुहृदा कमण्डलुना समुपेतम्, कण्ठाभरणीकृतेन च मृणालवलयेन रजनिकरकिरणपाशेनेव संयम्य लोकान्तरमुपनीयमानम्, कपिञ्जलेन मद्दर्शनादक्षणयमित्यूर्ध्वहस्तेन द्विगुणीभूतबाष्पोद्गमेनाक्रोशता कण्ठे परिष्वक्तं तत्क्षणापक्रान्तजीवितं तमहं पापकारिणी मन्दभाग्या महाभागमद्राक्षम् ।

उद्भूतमूर्च्छान्धकारा च पातालतलमिवावतीर्णा तदा क्वाहमगमं किमकरवं किं व्यलपमिति, सर्वमेव नाज्ञासिषम् । असवश्च मे तस्मिन् क्षणे किमतिकठिनतयास्य मूढहृदयस्य किमनेकदुःखसहस्रसहिष्णुतया हतशरीरकस्य किं विहिततया दीर्घशोकस्य किं भाजनतया जन्मान्तरोपात्तस्य दुष्कृतस्य किं दुःखदाननिपुणतया दग्धदैवस्य किमेकान्तवामतया दुरात्मनो मन्मथहतकस्य केन हेतुना नोदक्रान्ति स्म तदपि न ज्ञातवती । केवलमतिचिराल्लब्धचेतना दुःखभागिनी

दह्यामिव पतितमसह्यशोकदह्यमानमात्मानमवनौ विचेष्टमानमपश्यम्। अश्रद्दधाना चासम्भावनीयं तत्तस्य मरणमात्मनश्च जीवितमुत्थाय 'हा हा किमिदमुपनतम्' इति मुक्तार्तनादा,'हा अम्ब, हा तात हा सख्यः' इति व्याहरन्ती, 'हा नाथ जीवितनिबन्धन आचक्ष्व क्व मामेकाकिनीमशरणामकरुण विमुच्य यासि, पृच्छ तरलिकां त्वत्कृते मया यानुभूतावस्था युगसहस्रायमाणः कृच्छ्रेण नीतो दिवसः, प्रसीद सकृदप्यालप दर्शय भक्तवत्सलतामीषदपि विलोकय पूरय मे मनोरथम्, आर्तास्मि भक्तास्म्यनुरक्तास्म्यनाथास्मि बालास्म्यगतिकास्मि दुःखितास्म्यनन्यशरणास्मि मदनपरिभूतास्मि किमिति न करोषि दयां कथय किमपराद्धं किं वा नानुष्ठितं मया कस्यां वा नाज्ञायामादृतं कस्मिन्वा त्वदनुकूले नाभिरतं येन कुपितो दासजनमकारणात्परित्यज्य व्रजन्न बिभेषि कौलीनात्, अलीकानुरागप्रतारणकुशलया किं वा मया वामया पापया याहमद्यापि प्राणिमि, हा हतास्मि मन्दभागिनी, कथं मे न त्वं न तातो न विनयो न बन्धुवर्गो न परलोकः, धिङ्मां दुष्कृतकारिणीं यस्याः कृते तवेयमीदृशी दशा वर्तते, नास्ति मत्सदृशी नृशंसहृदया याहमेवंविधं भवन्तमुत्सृज्य गृहं गतवती, किं मे गृहेण किमम्बया किं वा तातेन किं बन्धुभिः किं परिजनेन वा, कमुपयामि शरणम्, अपि दैव दर्शय दयां विज्ञापयामि त्वां देहि दयितदक्षिणाम्, भगवति भवितव्यते कुरु कृपां पाहि वनितामनाथाम्, भगवत्यो वनदेवताः प्रसीदत प्रयच्छतास्य प्राणान्, अम्ब वसुन्धरे, सकललोकानुग्रहजननि रजनि किमर्थं नानुकम्पसे, तात कैलास शरणागतास्मि ते दर्शय दयालुताम्' इत्येतानि चान्यानि च व्याक्रोशन्ती, कियद्वा स्मरामि ग्रहगृहीतेवाविष्टेवोन्मत्तेव भूतोपहतेव व्यलपम्। उपर्युपरिपरिपतितनयनजलधारानिकरच्छलेन विलीयमानेव द्रवतामिव

नीयमाना जालकरिणीभिरभीक्रियमाणा, प्रलापानुसारैरपि दशन-
मयूखशिखरानुगततया साश्रुधारैरिव निष्पतद्भिः शिरोरुहैर-
प्यविरलविगलितकुसुमतया मुक्तबाष्पजलबिन्दुभिरिवाभ-
रणैरपि प्रच्छन्नविमलमणिकिरणाश्रुतया प्ररुदितैरिवोपेता,
तज्जीवितायेवात्ममरणाय स्पृहयन्ती, मृतस्यापि सर्वात्मना
हृदय प्रवेष्टुमिवेच्छन्ती, करतलेन कपोलयोराश्यानचन्दन
श्वेतजटामूले च ललाटे निहितसरसबिसयोरंसयोर्मलयज-
रसलवलुलितकमलिनीपलाशावगुण्ठिते च हृदये परामृशन्ती,
'पुण्डरीक निष्ठुरोऽस्येवमप्यार्तां न गणयसि माम्' इत्युपालभ-
माना, मुहुर्मुहुरेनमनुनयं मुहुर्मुहुः पर्यचुम्बं मुहुर्मुहुः कण्ठे
गृहीत्वा व्याक्रोशम्। 'आः पाप त्वयापि मत्प्रत्यागमनकालं
यावदस्यासवो न रक्षिताः' इति तामेकावलीमगर्हयम्।
'अयि भगवन्प्रसीद प्रत्युज्जीवयैनम्' इति मुहुर्मुहुः कपिञ्जलस्य
पादयोरपतम्। मुहुर्मुहुश्च तरलिकां कण्ठे गृहीत्वा प्रारुदम्।
अद्यापि चिन्तयन्ती न जानामि तस्मिन्काले कुतस्तान्यचि-
न्तितान्यशिक्षितान्यनुपदिष्टान्यदृष्टपूर्वाणि मे हतपुण्यायाः
कृपणानि चाटुसहस्राणि प्रादुरभवन्कुतस्ते प्रलापाः कुत-
स्तान्यतिकरुणानि दैन्यरुदितानि। अन्य एव स
प्रकारः। प्रलये मेघ इवोदतिष्ठन्नन्तर्बाष्पवेगानाम्। जलयन्त्र-
शीर्षाणीवामुच्यन्ताश्रुप्रवाहाणाम्। प्ररोहा इव निरगच्छन्प्रलापा-
नाम्। शिखरयुतानीवावर्धन्त दुःखानाम्। प्रसूतय इवोद-
पद्यन्त मूर्छानाम्।

ततश्च तथाभूते तस्मिन्नवस्थान्तरे मरणैकनिश्चया त-
त्तद्बहु विलप्य तरलिकामब्रवम्—'अभ्युत्तिष्ठ निष्ठुरहृदये कि-
यद्रोदिषि। काष्ठान्याहृत्य विरचय चिताम्। अनुसरामि जी-
वितेश्वरम्' इति। अत्रान्तरे झटिति चन्द्रमण्डलविनिर्गतो
गगनादवतीर्य केयूरकोटिलग्नममृतफेनपिण्डपाण्डुरं पवन-

तरलमंशुकोत्तरीयमाकर्षन्नुभयकर्णान्दोलितकुण्डलमणिप्रभा- [illegible] मुदकर्णपूरः कुङ्कुमपत्रलतालाञ्छितांसदेशः कुमुदधवलदेहो महाप्रमाणः पुरुषो महापुरुषलक्षणोपेतो दिव्याकृतिः स्वच्छवारिधवलेन देहप्रभावितानेन क्षालयन्निव दिगन्तराण्यामोदिना च शरीरतः क्षरता शिशिरेण शीतज्वरमिव जनयतामृतसीकरनिकरवर्षेण तुषारपटलेनेवानुलिम्पन्गोशीर्षचन्दनरसच्छटाभिरिवासिञ्चन्नैरावतकरपीवराभ्यां बाहुभ्यां मृणालधवलाङ्गुलिभ्यामतिशीतलस्पर्शाभ्यां तमुपरतमुत्क्षिपन्दुन्दुभिनादगम्भीरेण स्वरेण 'वत्से महाश्वेते, न परित्याज्यास्त्वया प्राणाः, पुनरपि तवानेन सह भविष्यति समागमः' इत्येवमादृतः पितेवाभिधाय सहैवानेन गगनतलमुदपतत्। अहं तु तेन व्यतिकरेण सभया सविस्मया सकौतुका चोन्मुखी किमिदमिति कपिञ्जलमपृच्छम्। असौ तु ससंभ्रममदत्त्वैवोत्तरमुदतिष्ठत्। 'दुरात्मन् क मे वयस्यमपहृत्य गच्छसि' इत्यभिधायोन्मुखः सञ्जातकोपो बध्नन्सवेगमुत्तरीयवल्कलेन परिकरमुत्पतन्तं तमेवानुसरन्नन्तरिक्षमुदगात्। पश्यन्त्या एव च मे सर्व एव ते तारागणमध्यमविशन्।

मम तु द्वितीयेनेव प्रियतममरणेन कपिञ्जलगमनेन द्विगुणीकृतशोकायाः सुतरामदीर्यत हृदयम्। किंकर्तव्यतामूढा च तरलिकामब्रवम्—'अयि न जानासि किमेतद्' इति। सा तु तदवलोक्य स्त्रीस्वभावकातरा तस्मिन् क्षणे शोकाभिभाविना भयेनाभिभूता वेपमानाङ्गयष्टिर्मम मरणशङ्कया च वराकी विषण्णहृदया सकरुणमवादीत्—'भर्तृदारिके, न जानामि पापकारिणी। किं तु महदिदमाश्चर्यम्। अमानुषा-

कृतिरेष पुरुषः । समाश्वासिता चानेन गच्छता सानुकम्पं पित्रेव भर्तृदारिका । प्रायेण चैवंविधा दिव्याः स्वप्नेऽप्यविसंवादिन्यो भवन्त्याकृतयः । किमुत साक्षात् । न चाल्पमपि विचारयन्ती कारणमस्य मिथ्याभिधाने पश्यामि । अतो युक्तं विचार्यात्मानमस्मात्प्राणपरित्यागव्यवसायान्निवर्तयितुम् । अतिमहत्खल्विदमाश्वासस्थानमस्यामवस्थायाम् । अपि च तमनुसरन्नेव कपिञ्जलः । तस्मात्कुतोऽयं को वाऽयं किमर्थं चानेनायमपगतासुरुत्क्षिप्य नीतः क्व वा नीतः कस्माच्चासम्भावनीयेनामुना पुनःसमागमाशाप्रदानेन भर्तृदारिका समाश्वासितेति सर्वमिदमुपलभ्य जीवितं वा मरणं वा समाचरिष्यसि । अदुर्लभं हि मरणमध्यवसितम् । पश्चादप्येतद्भविष्यति । न च जीवन्कपिञ्जलो भर्तृदारिकामदृष्ट्वा स्थास्यति । तेन तत्प्रत्यागमनकालावधयोऽपि तावद्ध्रियन्तामी प्राणाः ।" इत्यभिदधाना पादयोर्मे न्यपतत् । अहं तु सकललोकदुर्लङ्घ्यतया जीविततृष्णायाः क्षुद्रतया च स्त्रीस्वभावस्य तया च तद्वचनोपनीतया दुराशामृगतृष्णिकया कपिञ्जलप्रत्यागमनकाङ्क्षया च तस्मिन्काले तदेव युक्तं मन्यमाना नोत्सृष्टवती जीवितम् । आशया हि किमिव न क्रियते । तां च पापकारिणीं कालरात्रिप्रतिमां वर्षसहस्रायमाणां यातनामयीमिव दुःखमयीमिव नरकमयीमिवाग्निमयीं नवोत्सन्ननिद्रा तथैव क्षितितले विचेष्टमाना रेणुकणधूसरैरश्रुजलार्द्रकपोलसन्दानितैर्विमुक्तव्याकुलैः शिरोरुहैरपरुद्धमुखी निर्दयाक्रन्दजर्जरस्वरक्षयक्षामेण कण्ठेन तस्मिन्नेव सरस्तीरे तरलिकाद्वितीया क्षपां क्षपितवती ।

प्रत्यूषसि तूत्थाय तस्मिन्नेव सरसि स्नात्वा कृतनिश्चया तत्प्रीत्या तमेव कमण्डलुमादाय तान्येव च वल्कलानि तामेवाक्षमालां गृहीत्वा बुद्ध्वा निःसारतां संसारस्य, ज्ञात्वा

च मन्दपुण्यतामात्मनः, निरूप्य चाप्रतीकारदारुणतां व्यसनोपनिपातानाम्, आकलय्य दुर्निवारतां शोकस्य, दृष्ट्वा च निष्ठुरतां दैवस्य, चिन्तयित्वा चातिबहुलदुःखतां स्नेहस्य, भावयित्वा चानित्यतां सर्वभावानाम्, अवधार्य चाकाण्डभङ्गुरतां सर्वसुखानाम्, अविगणय्य तातमम्बां च, परित्यज्य सह परिजनेन सकलबन्धुवर्गं, निवर्त्य विषयसुखेभ्यो मनः, संयम्येन्द्रियाणि गृहीतब्रह्मचर्य्या देवं त्रैलोक्यनाथमनाथशरणमिमं शरणार्थिनी स्थाणुमाश्रिता । अपरेद्युश्च कुतोऽपि समुपलब्धवृत्तान्तस्तातः सहाम्बया सह बन्धुवर्गेणागत्य सुचिरं कृताक्रन्दस्तैस्तैरुपायैरभ्यर्थनाभिश्च बहुभिरुपदेशैरनेकप्रकारैः परिसान्त्वनैश्च नानाविधैर्गृहागमनाय मे महान्तं यत्नमकरोत् । यदा च नेयमस्माद्व्यवसायात्कथञ्चिदपि शक्यते व्यावर्तयितुमिति निश्चयमधिगतवांस्तदा निराशोऽपि दुस्त्यजतया दुहितृस्नेहस्य पुनः पुनर्मया विसृज्यमानोऽपि बहून्दिवसान्स्थित्वा सशोक एवान्तर्दह्यमानहृदयो गृहानयासीत् । गते च ताते ततः प्रभृति तस्य जनस्याश्रुमोक्षमात्रेण किल कृतज्ञतां दर्शयन्ती तदनुरागकृशमिदमपुण्यबहुलमस्तमितलज्जममङ्गलभूतमनेकक्लेशायाससहस्रनिवासं दग्धशरीरकं बहुविधैर्नियमशतैः क्षपयन्ती वन्यैश्च फलमूलवारिभिर्वर्तमाना जपव्याजेन तद्गुणगणानिव गणयन्ती त्रिसन्ध्यमत्र , सरसि स्नानमुपस्पृशन्ती प्रतिदिनमर्चयन्ती देवं त्र्यम्बकमस्यामेव गुहायां तरलिकया सह दीर्घशोकमनुभवन्ती चिरमवसम् । साहमेवंविधा पापकारिणी निर्लक्षणा निर्लज्जा क्रूरा च निःस्नेहा च नृशंसा च गर्हणीया निष्प्रयोजनोत्पन्ना निष्फलजीविता निरवलम्बना निःसुखा च । किं मया दृष्टया पृष्टया वा कृतब्राह्मणवधमहापातकया करोति महाभाग. ।

——:o:——

## VOCABULARY.

अंशु—A ray of light.
अंशुक—Fine cloth.
अंस—The shoulder
अकाण्ड—Sudden.
अकिञ्चन—A pauper.
अक्षमाला (,-मालिका,-सूत्र)—A rosary.
अक्षावली—A rosary.
अक्षौहिणी—A complete army representing the four-fold division of troops in full.
अग्रसन्ध्या—The morning twilight. [hand.
अग्रहस्त—The tip of the
अङ्गक्रिया—Cleansing the body with fragrant unguents.
अचिरद्युति—Lightning; momentary splendour
अच्छ—Transparent.
अच्युतम्—(73) Strictly.
अजस्रम्—Incessantly.
अञ्जन—Collyrium.
अतन्द्रिता—(19) Active.
अतिभूमि—Excess, climax.
अतिमानुष—Superhuman.
अत्यय—Expiry.
अत्याहित—A mishap.
अद्धा—Verily. [justice.
अधिकरण—A court of
अधिकार—(71) Duty, authority.
अधिक्षेप—Censure.
अधिगम—Acquisition.
अधिज्य—Stringed, strung.
अधिदेवता (,-दैवत)—A guardian deity. [nent.
अधिश्री—(25) More emi-
अधिष्ठान—An abode.
अधीतिनी Reciting hymns.
अध्यवसाय—Resolution.
अध्यवसित Resolved upon.
अध्यात्मवाद—Metaphysics.
अध्यारोपण—Ascription.
अध्वन्—Way, journey.
अनघ—(41) Safe.
अनघा—(14) Stainless.

अनङ्ग—Cupid.
अनम्र—Unyielding.
अनवद्य—Unblemished.
अनार्य—Ignoble.
अनाविल—(23) Untainted.
अनाशास्य—Unsought for.
अनिमित्त—An ill-omen.
अनीक—An army.
अनीश्वर—Unable.
अनुक्रोश—Compassion.
अनुगिरम्—Near the hill.
अनुगोदम्—On the banks of the Godāvarī.
अनुजीविन्—A dependant.
अनुनय—Supplication.
अनुप्लव—An attendant.
अनुबन्ध—Continuity.
अनुभाव—Dignity.
अनुयोग—(14) A query.
अनुरूप—(18) Worthy.
अनुवृत्ति—Compliance.
अनुशय—Repentance.
अनुशिष्ट—(16) Directed.
अन्वय—Ancestry.
अन्वर्थ—Significant.
अन्तःपुर—A gynæceum.
अन्तराय—An obstacle.
अन्तराल—Interval.
अन्तरीक्ष—The sky.
अपटी—A screen.
अपत्य—Offspring.
अपराग—Alienation.
अपरान्त The western coast.
अपरेद्युस्—The next day.
अपरोक्ष—Direct.
अपवर्ग—Absolution.
अपवर्जित—(6) Severed.
अपश्चिम—(61) First.
अपाङ्ग—Corner of the eye.
अपुष्कल—Insignificant.
अपेक्षा—(14) Regard.
अपोढ—(11) Removed, (15) discarded.
अप्रबुद्ध—Unenlightened.
अप्रत्यय—Mistrust.
अवन्ध्य—(17) Effectual.
अब्ज—A lotus.
अब्रह्मण्यम्—Oh dear!
अभव्य—Ungentle.
अभिचार—Witchcraft.
अभिजन—Pedigree.
अभिजात—Well-born.
अभिज्ञान—A souvenir.
अभिधान—A name

अभिधेय—(96) Expression
अभिनय—Acting.
अभिनिवेश—Intentness.
अभिभव—(2) Overthrow, (24) abuse.
अभिमर्श—(24) Outrage.
अभियोग—Attack.
अभिषङ्ग—Attachment.
अभिषेक(13,14,19)Ablution (15, 80) anointment.
अभिसन्धान—Cheating.
अभिसरण—Assignation.
अभ्यमित्रFacing the enemy.
अभ्यर्ण—Adjacent.
अभ्युपपत्ति—Favour.
अभ्युपेत—Accepted.
अभ्र—(13, 16) A cloud.
अमर्ष—Anger.
अमानुष—(76) Gigantic, (112) superhuman.
अम्बर(11) The sky,(29, 92) apparel, (30) heaven.
अम्बुज—A lotus.
अम्बुराशि—The ocean.
अम्बुरुह—A lotus.
अम्भोज—A lotus.
अय—An auspicious rite.
अयस्—Iron.
अयुग्मलोचन—S'iva.
अरविन्द—A lotus.
अराति—An enemy.
अराल—Curved.
अरुण—Aurora.
अर्क—The sun.
अर्चिस्—(3) Flame, a ray.
अर्णव—The ocean.
अर्थ्य—Significant.
अलक—A lock of hair.
अलक्तक—Lac.
अलम—(12,33) Able.
अलीक—False.
अलोकसामान्य—Extraordinary.
अवकाश—Space.
अवकीर्ण—(28) Set on.
अवग्रह—Drought.
अवचय—Culling.
अवतंस—An ear-ring.
अवतीर्ण—(14) Descended (81) Incarnate.
अवदात—White.
अवधि—(103) Limit.
अवधूत—Slighted.
अवभृत—Ablution at the close of a sacrifice.

अवरज A younger brother.
अवरोध—The seraglio.
अवलेप—(80) Pride.
अवसरप्राप्त,—(102) Suited to the occasion.
अवष्टम्भ—(88) Stupor, (52, 100) composure, (102) procedure.
अवस्तु—(28) A trash.
अवहित्था—Dissimulation
अवाप्ति—Attainment.
अविनय—Indecorum.
अविसंवादिनी—Consistent with self.
अव्यक्त—(14) Matter in the noumenal state.
अव्यभिचारिन्—(23) True without exception.
अशनि—Thunderbolt.
अश्मन्—Stone.
असम्भ्रम—(7) Unconcern.
असम्बद्धभाषिन्—One who talks incoherently.
असु—Life.
असुरविवर—The nether world.
असूया—Envy.
असृज्—Blood.
अस्र—A tear.
अहमहमिका—Emulation.
अहार्य—(15) Unshakable.
अहि—A snake.
अहित—(3) An enemy.
अह्नाय—Quickly.
आकूत—Significance.
आखण्डल—Indra.
आख्या—A name.
आगन्तुक—A new comer.
आचित—Covered, strewn.
आच्छोटन—Snapping.
आजीव—Livelihood.
आटोप—Strut.
आतपत्र—An umbrella.
आतिथेयी—Hospitable.
आत्तगन्ध—Humbled. (गन्ध—pride).
आदधान—(8) Causing.
आदर—Regard.
आदृत—(15) Regardful, (112) interested.
आत्मभू—Brahmā.
आधि—(43) A bane.
आध्मात—Inflated.
आपन्नसत्त्वा—Pregnant.
आपानभूमि—A wassail ground.

आप्त(68,71,82) A kinsman
आप्तजन्मन्--(19) Born.
आप्तवाच्--A seer, a sage.
(आप्त--Authentic)
आभरण--Ornament.
आमुष्मिक--(71) Spiritual
आयत--Long.
आयतन--(76) Abode
आयुध--A weapon
आर्त--Distressed.
आर्ति--Distress
आर्द्र--Moist, soft
आर्यपुत्र--Husband
आलवाल A basin for water round the root of a tree
आलान--(7) A tether, (8) a tying post [Edante
आली--A woman's con-
आलीन--Clinging to
आलेख्य--A painting.
आलोल--(89) Dishevelled
आवर्जित--(10, 11) Bent, (22) sprinkled
आवर्जितवती--(75) Having bewitched
आवर्त--(10) An eddy
आविल--(12) Foul, turbid
आविष्ट--(110) Frenzied.
आवेग--Hurry.
आवेश--(80) Influence (a by an evil spirit).
आशा--(5) A direction.
आशीविष--A serpent
आश्यान--Dried up
आषाढ--(22) A पलाश stat
आसङ्ग (18) Contact, (19) garment, (77) attachment
आसन्न--Adjacent
आसव--(4) Ale
आसार--A shower.
आस्थान--Assembly.
आस्पद (18, 25, 28) Place
आहत--(3) Smitten
आहित--(107) Caused.
आहिताग्नि--Agnihotrin.
आहोस्वित्-- Or.
इङ्गित--(27) Intention.
इन्दीवर--A blue lotus
इन्द्रजाल--Magic.
इन्द्रजालिक--A juggler.
इन्द्रनील--A sapphire.
इन्धन--Fuel.
इभ--An elephant.
इभ्य--A rich man.

